




श्रीशिवः शरणम् ।



शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

द्वादशखण्डस्य ] १८२७ शाकभाद्रमासस्य [ षष्ठसंख्या

श्रीगणेशाय नमः ।

## मासावतरणिका ।

जायतां घनरसोदयस्त्वयि
प्रावृषा ननु नभस्य मनोज्ञः ।
किन्तु रोहति तृणं महीभृतां
मूर्धसूल्लसति भूश्च पल्लवैः ॥

## सुभाषितानि ।

धिगेतां गर्हितां लोके दुराचारानुजीविताम् ।
यया सुप्ताः क्षयं यान्ति निर्दोषा अपि सेवकाः ॥ १५ ॥

त्वं मन्दिरद्रविणदारतनूभवाद्यै-
स्तृष्णातमोभिरनुबन्धिभिरस्तबुद्धिः ।
क्लिश्नास्यहर्निशमिमं न तु चित्त वेत्सि
दण्डं यमस्य निपतन्तमकाण्ड एव ॥ १६ ॥

पुरःफलायामाशायां जनः कामं विडम्ब्यते ।
आसन्ने हि घनारम्भे द्विगुणं रौति चातकः ॥ १७ ॥

क्रमात्कक्षामक्ष्णोः परिसरभुवं वा श्रवणयो-
र्मनागध्यारूढं प्रणयिजननामाक्षरपदम् ।
कमप्यन्तस्तोषं वितरदवलम्बादनुपदं
निसर्गाद्विश्वेषां हृदयपदवीमुत्सुकयति ॥ १८ ॥

# वङ्गीयप्रवादानुवादाः।

( पूर्वतोऽनुवृत्ताः )

| | |
|---|---|
| ४७ नावाड्त्रे मुडार नातिमरे आगे. | अवत्स्यमानवंशस्य नप्ताग्रे म्रियते ध्रुवम्। |
| ४८ काणा मायै नमस्कार, वचने इ तुष्ट. | काणमातृसखि नमस्तुष्यामि वचसैव ते। |
| ४९ एकेत नाचनी बुडी, ताते पेल ढाकेरवाडी. | एकतो नर्तकी वृद्धा तत्राप्ता ढक्किकाहतिम्। |
| ५० काणा गुरुर भिन्न पथ. | काणगोरपरः पन्थाः। |
| ५१ दुष्टगुरुर चेये, शून्य गोयाल भाल. | वरं शून्यं गोगृहं दुष्टगोभ्यः। |
| ५२ दूद्देय गुरुर लाथिओ भाल. | गोर्दुग्धदात्र्या वरमङ्घ्रिपातः। |
| ५३ काढा काण चुल दिये ढाके. | छिन्नः कर्णः केशतश्छादनीयः। |
| ५४ पयसा दिये काणा प्यादा. | दत्ते धने काणपदातिको मम। |
| ५५ मनेर नाम महाशय याहा सहा ओ ता इ सय. | मनो महाशयो नाम्ना यत्साह्यं सहते च तत्। |
| ५६ उपवासे येमन तेमन पान्नाय दढ. | उपवासे यथैवास्तां पारणानिपुणस्त्वसौ। |
| ५७ चौरेर मने गुद्गुति सार. | चौरहृद्युत्कता सारः। |
| ५८ ठाकुर घेरे केरे? आमिकला खाइना. | कस्त्वं रे विष्णुसदने नाश्नामि कदलान्यहम्। |
| ५९ चिना बामुनेर फोँटार दरकार कि? | ज्ञातद्विजानां तिलकेन कोऽर्थः। |
| ६० अनभ्यासेर फोँटा कपाल चच्चट करे. | अनभ्यस्तस्य तिलकं कपाले चच्चडायते। |
| ६१ अतिक्षुधातेर गाछेर आगाय भात. | अतिक्षुधार्तस्य नगाग्रतोऽन्नम्। |
| ६२ ना खाय धने पर्वत छोय. | अखादतः स्पृशति धनं महीधरः। |
| ६३ छालनाइ कुतार वाघा नाम. | व्याघ्रेति नाम्ना गतचर्मकुक्कुरः। |
| ६४ काणा छेलेर नाम पद्मलोचन. | काणः पुत्रो नामतः पङ्कजाक्षः। |

# श्रीमान् बालकविः ।

( पूर्वतोऽनुवृत्तः )

समुपहृतं संस्कृतचन्द्रिकायाः प्रणयिभ्यो यावल्लभ्यं कवेरस्य चरितमस्माभिः । किन्तु यावन्ति किलास्य समयनिर्णये साधनान्यपेक्ष्यन्ते न किल तदा तावन्ति नः सुलभान्यासन् । तदेतदुल्लिखितपूर्वमेवास्माभिरतीतासु संख्यासु । कविना ह्यनेन प्रणीते माहिषशतके समुपलब्धानि नानाजिप्रभुप्रभृतीनां नामान्यस्माभिर्नैव पुनरमीषां प्रवृत्तिः काचिदप्युपलब्धा यतः कवेरस्य समयादिकं यथावन्निर्णीयेत । केवलं स्वीयपुस्तकागारे विद्योतमानं माहिषशतकमेव सारस्यविशेषविशिष्टतयात्मनः प्रबन्धुरस्य कवेः समयादिनिर्णये चात्मनः समालोचनायां च हठात्कारपुरःसरमिव प्रावीवृतदस्मान् । व्याख्याकृता भूमिकायां समुल्लिखितश्च कवेरस्योदन्तः सविशेषमेव कवेरस्य समयादिनिर्णये प्रोत्साहयामास । नासीत्पुनरेवंविधस्यात्मनः समीहितस्य साधने पर्याप्ता सामग्री सविधेऽस्माकमाप्तोपदेशमयी । अतश्चानुमानमात्रमेवालम्ब्य प्रावीवृताम समभिलषितमात्मनः साधयितुम् । प्राचीकशाम च यथानुमितं चरितमेतस्य । तर्कमात्रमूलकं चैतद्यावत्प्रमाणान्तरोपलम्भमेव प्रतिष्ठितमिति नैतद्वक्तव्यं नामास्माभिः । समस्वरमेव हि स्वीक्रियते तर्कस्याप्रतिष्ठितत्वं सर्वैरिति । अत एवोक्तं वाचस्पतिमिश्रैः—

**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥इति॥**

अत एव चाप्रतिष्ठितस्तर्कः ।

अस्माभिः प्रकाशितं चैतच्छ्रीमतो बालकवेश्चरितमवलोक्य ज्ञापिता वयममुष्य प्रामादिकत्वं प्रियसुहृद्भिरस्माकं विशाखपत्तनीयैः श्रीवेङ्कटरङ्गनाथशास्त्रिमहोदयैः कवेरस्य समयादिनिर्णयसाधनीभूतप्रमाणाधिगमस्थाननिर्देशपुरःसरमेवेति कृतज्ञाः किल स्मो वयमेतेषु । विज्ञाय चाशयममीषां प्रार्थिताः श्रीमन्तः काव्यमालासम्पादकाः प्रियसुहृदोऽस्माकं श्रीकेदारनाथसाहित्योपाध्यायाः समभिलषितप्रबन्धप्रदानेनान्वगृह्णन्नविलम्बितमेवेति तेष्वपि सप्रणयोन्मेषं कृतज्ञभावमावहन्तः पुनरपि कवेरस्य समयादिनिर्णये प्रवर्तयामो लेखनीमात्मीयाम् ।

एष किल कविर्द्रविडेष्वेव लब्धजन्मा कावेरीतीरवर्तितञ्जपुराधीश्वरभोसलकुलभूपालमन्त्रिवंशसम्भूत इति माहिषशतकव्याख्यातुः कवेरस्य प्रणप्तुर्वचनतो विज्ञायते। तथा ह्युक्तं व्याख्यानोपक्रम एतेन

श्रीमत्कवेरजातीरं विद्वद्वृन्दोपशोभितम्।
अत्युत्तमशिवक्षेत्रं विष्ण्वादिस्थानमस्ति हि॥
तत्र तञ्जपुरं नाम राजस्थानमनुत्तमम्।
राजानः प्रथितास्तत्र भोसलीयान्ववायजाः।
तदमात्यकुलोत्पन्नः श्रीमान्वाञ्छेश्वरः सुधीः।
शिष्टः कनटजातीयो वेदवेदाङ्गपारगः॥
नीतिमार्गेण राजानं तत्तत्कालेष्वचोदयत्।
कदाचिद्बालको राजा मेलयित्वा खलान्बहून्॥
खेलंस्तैः सर्वदा मुग्धो न शुश्राव हितं वचः।
तेभ्यो निवर्तयन् भूपं सन्मार्गे संप्रवर्तयन्॥
महिषस्तुतितो राजबुद्धिं चक्रे सुनिर्मलाम्॥ इति।

अस्य च कवेः प्रधानं नाम वाञ्छानाथ इत्येव। एवमेव हि कलिकातायां संमुद्रितेषु चान्येषु च द्राविडाक्षरमयेषु माहिषशतकपुस्तकेषूपलभ्यते। यथा

वाञ्छानाथकवेः कृतिश्च कुरुतान्निर्मत्सराणां मुदम्। इति।

अस्मद्देशीयेषु पुनः पुस्तकेषु चरणोऽयमस्य पद्यस्य

श्रीमद्बालकवेः कृतिश्च कुरुतान्निर्मत्सराणां मुदम्।

इत्येवंविध एव सन्दृश्यते। प्रसिद्धिः पुनरस्य कुट्टिकविरिति नाम्नैवासीदिति

ख्यातः कुट्टिकविश्च दुर्धनिगृहद्वारेषु निद्रायते।

इत्येतस्य माहिषशतकीयपद्यचरणस्य द्राविडव्याख्यानादवगम्यते। उक्तं हि तत्रावतरणिकायाम्—स्वस्य दशामाह कुट्टिकविः स्वयं दुर्धनिनां दुष्टधनिकानां गृहद्वारेषु बहिः प्रदेशेषु निद्रायते स्वपिति। इति। कुट्टिकविरिति पदं च बालकविरित्यर्थकं द्राविडभाषायाम्। अयं किल कविर्बाल्य एव साहित्यशास्त्रनिष्णातः काव्यानि रचयाञ्चकारेत्यत एव कुट्टिकविरित्येनमाचचाक्षिरे तद्देशीयाः। सुप्रथित एव चप्रवादोऽयं द्राविडविबुधेषु।

वाञ्छानाथ इत्यभिधानान्तर्गतस्य नाथपदस्य परिवृत्तिसहिष्णुतया च तत्रेश्वरपदं प्रयुञ्जते द्रविडदेशीयाः । तत एव च कवेरस्य वाञ्छेश्वर इत्यभिधानमुल्लिख्यतेऽस्य प्रणप्त्रेति द्रष्टव्यम् । ततश्च कवेरस्य कुट्टिकविर्बालकविर्वाञ्छानाथो वाञ्छेश्वरश्चेत्यभिधानचतुष्टयं पर्यवस्यतीति द्रष्टव्यम् । अत एव च यदुक्तमस्माभिः प्रबन्धस्यास्य शीर्षके श्रीमान्बालकविरिति तदेतन्नांशतोऽपि विरुध्यत इत्यवबोध्यम् ।

स चायं कविप्रवरः श्रीशालिवाहनस्य सप्तदश्यां शताब्द्यां चोलमण्डलमलञ्चकारेति ज्ञायते । अयं हि प्रतापसिंहं नाम तञ्जापुरीयं भोसलवंशभूपालमाशिष योजयति माहिषशतकस्य ( मोहमयीविभागीयस्य ) षडधिकैकशततमे पद्ये । यथा—

श्रीमद्भोसलवंशदुग्धजलधेः संम्पूर्णचन्द्रोपमो
यः शास्ति क्षितिमक्षति क्षितिपतिर्मूर्तिः प्रतापः स्वयम् ।
दीर्घायुर्जितशत्रुरात्मजयुतो धर्मी प्रजारागवा-
नुल्लाघोऽस्तु स निस्तुलैर्निजसभास्तारैः क्रमादागतैः ॥ इति ।

प्रतापसिंहश्च भूपालः शालिवाहनशकस्य १६६२ वत्सरमारभ्य १६८६ वत्सरंयावत्तञ्जापुरीयभूपतीनां भद्रासनमलञ्चकारेति तञ्जापुरीयपुरावृत्तविदः श्रीकुप्पुस्वामिशास्त्रिणः प्राहुः । अत एव चास्मिन्नवसर एवास्यावस्थितिरिति विस्पष्टमेवैतत् ।

एवं च

नानाजीप्रभुचन्द्रभानुशहजीन्द्रानन्दरायादयो
विद्वांसः प्रभवो गताः श्रितसुधासन्दोहजीवातवः ।
विद्यायां विषबुद्धयो हि वृषलाः सभ्यास्त्विदानीन्तनाः
किं कुर्वेऽम्ब कृपे व्रजानि शरणं त्वामेव विश्वावनीम् ॥

इत्यत्र पद्ये नानाजीप्रभृतीनामतीतत्वेनोल्लेखोऽपि सांगत्यं भजते । नानाजीप्रभृतयो हि तञ्जोरपुरमन्त्रिप्रभृतयस्ततः पूर्वमेव दिवं जग्मुरिति । के पुनरमी नानाजीप्रभुप्रभृतय इति विशदीकृतमेतच्छ्लेषार्थचन्द्रिकायां व्याख्यात्रा । यथा नानाजी धर्मश्रेष्ठः अमात्यश्चन्द्रभानू राजा शहाजिः प्रख्यातो राजा आनन्दरायस्तदमात्यः प्रसिद्धः । इति ।

तदेवं कविरयं शालिवाहनस्य सप्तदशशताब्द्या मध्ये तञ्जोरमण्डलमर्थाच्चोलमण्डलमधितष्ठौ भोसलवंशीयानां तञ्जोरनगराधीशानाममात्यवंशे समधिगतजन्मा चेति विशदीभवति ।

कवेरस्य प्रबन्धप्रणयने योऽयं हेतुरुपन्यस्यते व्याख्याकृता

**कदाचिद्बालको राजा मेलयित्वा खलान्बहून् ।**
**खेलंस्तैः सर्वदा मुग्धो न शुश्राव हितं वचः ॥**
**तेभ्यो निवर्तयन् भूपं सन्मार्गे संप्रवर्तयन् ।**
**महिषस्तुतितो राजबुद्धिं चक्रे सुनिर्मलाम् ॥ इति ।**

सोऽयं तदानीन्तनतञ्जोरभूपालहृदयावर्जनायैव न पुनः पारमार्थिक इति प्रतीयते माहिषशतकगतैः पद्यैः । यदि हि मन्त्रिवंशाधिगतजन्मा कविरयं राजानं कापथादपसारयितुमेव महिषस्तवं विधातुमभ्यलषिष्यत्तदाऽवश्यं तथैवास्य भूमिकायामुपन्यभन्त्स्यत् । नैव पुनरुपनिबबन्धेति नायं महिषशतकप्रणयने हेतुरित्यनुमीयते । अवाप्तक्लेशः किलायं कवी राजपुरुषेभ्य इति नात्र सन्देहकणिकापि । तदेतन्माहिषशतकाख्योऽस्य प्रबन्ध एव विस्पष्टाक्षरं प्राह । यथा—

**यो यं रक्षति तस्य स प्रभुरिति स्पष्टं हि मद्रक्षिणो**
**राजच्छ्रीमहिषान्विनुत्य सफलं कुर्वेऽद्य वाग्वैभवम् ।**
**मत्पीडानिरतान्मदीयमहिमाभिज्ञानशून्यान्प्रभून्**
**यन्निन्दामि निशम्य तद्गुणविदस्तुष्यन्तु सन्तो नृपाः ॥ इति ॥**

अत्र च मत्पीडानिरतानिति प्रभुविशेषणमस्मदीयमेवाभिप्रायं प्रपुष्णाति ॥ क्लेशश्चायं कविनैव विवृतः पद्यान्तरे । यथा—

**विद्याजीवनकुण्ठनेन च कृषावङ्गीकृतायां चिरा-**
**दापक्वे कणिशे कुतोऽपि पिशुनाः केदारमावृण्वते ॥ इति ॥**

किं च—

**देहं स्वं परिताप्य यद्धि भवता धान्यं धनं वार्जितं**
**तत्सर्वं प्रसभं हरन्ति हि सुभेदाराः स्वकीयं यथा ॥ इति ॥**

अपि च—

**कायक्लेशमहर्निशं विदधता द्राघीयसाऽनेहसा**
**केदारे भवतान्तरायबहुले निष्पादितं यत्फलम्।**
**त्वद्भाग्येन समं समस्तमपि तद्येनाधमेनाहृतं**
**तं क्षिप्रं यमसन्निधिं नय लुलायाधीश तुभ्यं नमः॥ इति।**

समाश्रिता च भूपालदुर्विनयानुभूतनानाविधक्लेशेन कृषिरेतेनेत्युपरितनेभ्य एव पद्येभ्य एतेभ्यः स्फुटीभवति। अत एव च ब्राह्मणस्यात्मनः कृष्याश्रयणमनुचितमित्याशङ्क्य परिहरति—

**आपद्धर्मतया मनौ च कृषिगोरक्ष्यादिकं संमतम्। इति॥**

एवं धरापतिप्रदत्तक्लेशानुभवनिर्विण्णेन सुदुर्लभजीविकतया विफलीभूतवैदुष्येण च समाश्रिता कृषिरेतेन। ततोऽपि च परिपक्वकणिशाद्यपहारं राजपुरुषकृतमेवावेक्ष्य परमेव विषादमुपयातेन परां कोपकोटिमारूढेन चात्मना क्रीतो महिष उपश्लोकयामास इति माहिषशतकतः सुविस्पष्टीभवति।

ननु यदि क्लेशं महीयांसमनुभूतवता कविनाऽनेन क्रीतो महिषः समाश्रिता कृषिर्निन्दिता दुष्प्रभवः समभिष्टुतश्च माहिष इति नैतद्वितथं तदा का गतिरस्य प्रणप्त्रा व्याख्यानोपक्रमे ग्रथितस्य

**नीतिमार्गेण राजानं तत्तत्कालेष्वचोदयत्।**
**कदाचिद्बालको राजा मेलयित्वा खलान्बहून्॥**
**खेलंस्तैः सर्वदा मुग्धो न शुश्राव हितं वचः।**
**तेभ्यो निवर्तयन्भूपं सन्मार्गे च प्रवर्तयन्॥**
**माहिषस्तुतितो राजबुद्धिं चक्रे सुनिर्मलाम्।**

इत्यादिपद्यनिवहस्येति चेदत्र ब्रूमः। यथा किल कुलकामिन्यः सुस्पष्टमेव नोद्घोषयन्ति पत्युरपराधान्परन्तु प्रशंसन्त्येवैनं दण्डभयादेवं भूपालतोऽधिगतजीविकाः किल पुरुषाः पौरुषविनाकृता इवाश्रयभङ्गभिया कृतापराधमपि भूपालमुपश्लोकयन्त्येव परिहरन्ति चात्मसम्बन्धिनोऽपि भूपापराधित्वम्। एवं च कुर्वाणाः सुखमेव प्रयच्छन्ति निवापाञ्जलिं पारमार्थिकायार्थायेति नैतदिदानीं

परोक्षं नाम प्रायेण कस्यापि। तदेतदपि नाश्चर्यं यन्माहिषशतकव्याख्याता श्रीमान् वाञ्छेश्वरोऽपि माहिषशतकतो निर्विशङ्कमेव विशदीभवन्तमर्थं यावच्छक्यं निगूहितुमेव प्रायतिष्टेति। एवंविधैश्चात्मनो वचनैः प्रच्छाद्यमानोऽप्ययमर्थ एतेन जलदपटलैः सञ्छन्न इव भास्वानाविष्करोत्येवात्मनः कान्तिमिति नात्र सन्देहः। प्रमाणं चात्र व्याख्यातुरेव कदाचिद्बालको राजेत्यादिकं पद्यम्। एतेन हि राज्ञः सार्वदिकं मूढत्वमप्रगल्भत्वं खलजनसाहाय्यतो नानाविधदुर्व्यवसायानुष्ठायित्वं चाभिधीयते तत एव च श्रीमति बालकविमहाशयेऽपि समापातिता विपदनेनेति व्यज्यते। व्यङ्गमर्यादया चार्थस्यास्योपनिबन्धने यद्बीजं तदेतन्निर्दिष्टपूर्वमेवास्माभिः।

कविरयं न किल केवलं तञ्जोरमण्डल एव कृतावासः किन्तु श्रीरङ्गपत्तनेऽपि विहितवसतिस्तत्र चावाप्तक्लेशातिशयः प्रतिनिवृत्यैव क्वापि शिश्रायेति प्रतीयते। अत एवोपादिश्यते माहिषशतके विद्वानेतेन यथा—

**विद्वन्मा कुरु साहसं शृणु वचो वक्ष्यामि यत्ते हितं**<br>
**त्यक्त्वा कामदमत्र सैरिभपतिं निर्व्याजबन्धुं नृणाम्।**<br>
**श्रीरङ्गाभिधपत्तनं प्रति सखे माऽगा ज्वरस्यालयं**<br>
**दूरे श्रीर्निकटे कृतान्तमहिषग्रैवेयघण्टारवः ॥ इति।**

तदयं सारः कविरेष चोलमण्डलेऽधिगतजन्मा वेदवेदाङ्गादिपारङ्गमः कर्नाटजातीयः शिष्टस्तञ्जपुराधीश्वरामात्यान्वयसंभूतो मूढतमाद्भूपाच्च तदीयपुरुषेभ्यश्चावाप्तक्लेशातिशयो विफलप्रायपाण्डित्यश्च जीविकाशया श्रीरङ्गपट्टनं प्रयातस्तत्रापि महतीमेव विपदमुपयातः प्रतिनिवृत्य चोलमण्डल एव क्रीत्वा महिषं कृषिमाश्रित्य जीवितमतिवाहयन्नासीत्। तथापि सम्पन्नप्रायाण्यस्य धान्यान्यपाहार्षुर्दुरात्मानो राजपुरुषा इति कोपातिशयेनाविष्टः स्वीयं महिषमधिकृत्य पद्यानीमानि विरचयामास यानि खलु माहिषशतकत्वेनाख्यायन्ते। इति।

( क्रमशः )

---

# सूक्तिमञ्जरी ।

( पूर्वतोऽनुवृत्ता )

सहन्तेऽहर्निशं यस्य कृते दुःखशतं नराः ।
मनुजानां महान्सोऽरिः स्वोदरं न परः क्वचित् ॥ ३० ॥

चित्रं ह्यपारपयसां निधिरेष सिन्धु-
श्चित्रं ततोऽप्यपिबदेनमसौ मुनिर्यत् ।
अत्यद्भुतं तदपि यस्स घटाद्भुजन्मा
को वा विभुर्गणयितुं प्रकृतेश्चरित्रम् ॥ ३१ ॥

न दुर्वृत्तिकृतैरर्थैर्भवति द्रविणाधिपः ।
कूपो न पूर्णतां याति तुषारकणिकाजलैः ॥ ३२ ॥

न वाचं संदत्ते भणति मयि लज्जा मुकुलिता
हठात्कण्ठाश्लिष्टे मयि वितनुते कम्पमधिकम् ।
धुनीते हस्ताब्जे अधरमधुपाने तदपि सा
मनः सान्द्रानन्दैर्जडयति किलाह्लादयति च ॥ ३३ ॥

वहन्ती पर्यस्तामपरकरपद्मेन कबरीं
दुकूलं चान्येन स्तनतटविशीर्णं विदधती ।
असावक्षीणश्रीरतिलुलितगात्राऽपि शनकैः
प्रियाऽऽवासाद्याति स्मरनवजयश्रीरिव वधूः ॥ ३४ ॥

प्रियो यात्रां यास्यत्ययमिति सखिन्नं मम मनो
जगन्नेत्रानन्द्यो विधुरपि हला मां व्यथयति ।
हरन्तीव प्राणानुपवनसमीरा इत इमे
पिकानां संलापो भवति च विलापोदय इव ॥ ३५ ॥

न धनी निर्धनजनव्यथां जानाति जातुचित् ।
तेनैव ज्ञायते पीडा यस्यासन्विपदः पुरा ॥ ३६ ॥

२

नातिमात्रमघं कुर्वन्बिभेति लघुनोऽघतः ।
पङ्कैर्मलीमसाङ्गः किं पांशुभ्यस्त्रस्यते जनः ॥ ३७ ॥

मुखं चेलान्तेन स्थगयसि बलाच्चुम्बनविधौ
हठाश्लेषं वाञ्छत्यपहरसि गात्राणि सुतराम् ।
छलादङ्कं नीता निभृतनिभृतं रोदिषि चिरं
निषेधो वा सोऽयं विधुमुखि ममाहो अनुमतिः ॥ ३८ ॥

परिपिबत चकोराः कण्ठमुन्नीय कामं
कवलनचतुराभिश्चञ्चुभिश्चन्द्रकान्तिम् ।
ननु विरहिजनानां प्राणसंत्राणहेतो-
र्भजतु हतसुधांशुः कौमुदीहीनभावम् ॥ ३९ ॥

अवितथमिह मित्र ! यद्वियुक्तै-
र्युगलमिदं सहसा न सह्यमस्ति
अविरलघनशीतलश्च कालो
दयितजनेन समं च विप्रयोगः ॥ ४० ॥

विधाय पुंसां प्रथमं सुखं विधि-
स्ततो महत्पातयति व्यथाशतम् ।
प्रकाश्य पूर्वं तरलं त्रिविष्टपं
निपात्यते यत्तडिताऽशनिः सखे ॥ ४१ ॥

समानीता पादप्रपतनशतैर्वासभवनं
विनीता चाटूक्तैः कथमपि निशान्ते च शयनम् ।
धुनाना हस्ताब्जं सकृदधरपानेऽब्जवदना
नितान्तं नश्चित्तं रमयति च संतापयति च ॥ ४२ ॥

इमान्पुण्यारामप्रसरदवधूमाक्तवपुषः
कटाक्षान्वामाक्ष्याः किमिति शठ ! संवीक्ष्य रमसे ।
इमे कालव्यालाः प्रबलविषजालार्द्ररसनाः
सुदूरं त्यज्यन्तामभिलषसि बन्धो यदि हितम् ॥ ४३ ॥

वियोगविद्वेषि शमैककोशं
धीमन्त्रि वैराग्यबलं क्षमास्त्रम् ।
लोकोत्तराणामतिधैर्यभाजां
धैर्यं त्वजर्यं गतभीति राज्यम् ॥ ४४ ॥

सुखे च दुःखे च समप्रवृत्तयो
जयन्ति ते धीरतरा विवेकिनः ।
सुखे न येषां हृदयं प्रमाद्यति
दुःखे तथा दीर्घतरे न दुःख्यति ॥ ४५ ॥

तरुणि ! तरुणमब्जं मज्जतु स्फीतवापी-
पयसि तव मुखश्रीर्नैव लभ्या तु तेन ।
प्लवतु कलभकुम्भः काममम्भोधिमध्ये
तदपि तव नितम्बोत्तालतां नैव विन्देत् ॥ ४६ ॥

रम्यासु हंस इव नन्दनपद्मिनीषु
सान्द्रासु भृङ्ग इव वञ्जुलमञ्जरीषु ।
काव्यब्रह्मैकमपहाय विहाय वैरं
कोऽन्यः सतां सरससूक्तिषु सक्तचित्तः ॥ ४७ ॥

नातिशास्त्रप्रगल्भेन रमानाथद्विजन्मना ।
प्रीत्यै रसवतां भूयात्कृतेयं सूक्तिमञ्जरी ॥ ४८ ॥

इति श्रीभट्टरमानाथविरचिता सूक्तिमञ्जरी ।



## मद्रविभागीया कालस्थितिः।

सन्तप्ता सवितुः करैः सततमप्यास्ते रसा नीरसा
सेयं किञ्चिदवोक्षिताम्बुपृषतैर्नीहारमेघच्युतैः।
स्मारं स्मारमनल्पवर्षविभवात्पूर्वानुभूतं सुखं
बाष्पं मुञ्चति धूलिधूसरतनुर्वन्ध्यत्वमासेदुषी ॥ १ ॥

विष्वग्रासभधूलिधूसरतनुर्वातः किरन्मुर्मुरं
लोकं शोषयति प्रकाममपटुतां भास्वान्दधात्युच्चकैः।
भूरप्यद्य नखम्पचा तत इतस्तोयं त्वभूद्दुर्लभं
हा हासीत्पुटपाक एव जगतो दैवे परागानने ॥ २ ॥

पण्डित ति. अ. ति. श्रीकुमारताताचार्याणाम्।
ट्रिप्लिकेन्, मद्रास्.

---

## विशेषतो द्रष्टव्यम्।

विज्ञापितपूर्वमेवैतदनेकशोऽस्माभिर्यदद्ययावदप्रदत्तमूल्येभ्यः संस्कृतचन्द्रिकायाः प्रणयिभ्यः सप्तमी संख्या व्ही० पी० द्वारा प्रेर्येतेति। समासन्नश्च सोऽयं समयः। एषा हि षष्ठी संख्या प्रतिष्ठते प्रेयसां हृदयमनुरञ्जयितुम्। आश्विने च सप्तमी प्रतिष्ठेत। एषैव यथोचितं व्ही० पी० द्वारा प्रहीयेत। व्ही० पी० करणसूचनार्थं पृथक्पत्रप्रेषणस्यानावश्यकत्वादप्रेष्यैव तत् व्ही० पी० करिष्यामः। तामिमामवश्यमङ्गीकुर्यासुश्चन्द्रिकायाः प्रणयिनः प्रोत्साह्यासुश्चास्मानिति किल बलवदाशास्यतेऽस्माभिः।

या च समीहिता साप्ताहिकी संस्कृतपात्रिका प्रकाशयितुमस्माभिः सेयमद्ययावदनधिगतपर्याप्तग्राहकतया न शक्येत विजयदशमीतः प्रभृति प्रकाशयितुम्। यदा तु सम्पद्येत ग्राहकाणां चतुःशती तदाऽसाववश्यं प्रकाश्येत। आदर्शं पुनरस्या अचिरादेव प्रकाशयिष्यामः।

सं० चं० सहकारिसम्पादकः।

---

# द्वादशकारिका।

( त. कौ. ) त्रिगुणमित्युक्तं तत्र के ते त्रयो गुणाः किञ्च तल्लक्षणमित्यत आह। (१)

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।**
**अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः॥ १२॥(२)**

गुणा इति परार्थाः सत्त्वं लघुप्रकाशकमित्यत्र च सत्त्वादयः क्रमेण निर्देक्ष्यन्ते। तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम्।

---

( १ ) त्रिगुण–आह। के ते इति नामस्वरूपप्रश्नः। तल्लक्षणं तेषां गुणानां लक्षणं स्वरूपम्।

( २ ) प्रीत्य–गुणाः। गुणाः सत्त्वरजस्तमांसि प्रीत्यप्रीतिविषादात्मकाः। प्रीतिः सुखं अप्रीतिर्दुःखं विषादो मोहः तेआत्मानः स्वभावाः स्वरूपं येषां ते सुखदुःखमोहस्वरूपा इत्यर्थः। प्रकाशप्रवृत्तिनियमार्थाः। प्रकाशो बोधो ज्ञानं प्रवृत्तिः क्रिया नियम आवरणं आच्छादनं ते अर्थाः प्रयोजनानि येषां ते। बोधाक्रियाऽऽवरणप्रयोजनका इत्यर्थः। अन्योन्यवृत्तयः। अन्योन्यं परस्परं अभिभवः पराभवः दुर्बलीकरणमिति यावत्। आश्रयः साहाय्यापेक्षा जननं परिणमनं मिथुनं साहचर्यं वृत्तिः क्रिया येषां ते। परस्परं अभिभाविनः स्वकार्यजनने परस्परसाहाय्यापेक्षिणः। परस्परपरिणामहेतवः परस्परसहचराश्च भवन्तीत्यर्थः।

( ३ ) गुणा–इति। परार्थाः परप्रयोजनसिद्धिहेतवः परोपकरणानि पुरुषोपभोगसाधका इत्यर्थः। पुरुषात्मकपशुबन्धकत्वात्तद्बन्धकमहदादिरज्जुनिर्मातृत्वाच्च सत्त्वादिद्रव्येष्वपि गुणपदवाच्यत्वव्यवहारः। नत्वत्र कर्मान्यत्वे सति द्रव्योपादानकत्वं गुणत्वमिति वैशेषिकसम्मतिरभिप्रेता। नन्वत्र येषां लक्षणानि निर्दिश्यन्ते नाम्ना ते के इत्याकाङ्क्षायामाह सत्त्वं लघुप्रकाशकमित्यत्र चेति। चशब्दः किन्त्वित्यर्थे निर्देक्ष्यन्ते नामतो वक्ष्यन्ते। तत् तस्मात् निर्देक्ष्यमाणत्वात्। अनागतानां सत्त्वं लघु प्रकाशकमित्यत्र वक्ष्यमाणानां अवेक्षणेन दर्शनेन अधिकृत्य सन्धानेनेत्यर्थः। तन्त्रयुक्त्येति। तन्त्यते व्युत्पाद्यते अस्मिन् अनेनेति वा तन्त्रं शास्त्रं तस्य युक्तिर्योगः सम्बन्धः अन्वयः तया उभयत्रान्वयेनेत्यर्थः। एतेन सकृदुच्चरितः शब्दः सकृदर्थं प्रत्याययतीति

एतदुक्तं भवति—प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः अप्रीतिर्दुःखं अप्रीत्यात्मको रजोगुणः विषादो मोहः विषादात्मकस्तमोगुण इति । ( ३ )

ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान्प्रत्यात्मग्रहणम् । तेन नेतरेतराभावाः सुखादयः अपि तु भावा आत्मशब्दस्य भाववचनत्वात् । प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः एवमन्यदपि व्याख्येयम् । ( ४ )

---

न्यायानवसरः । तन्त्रयुक्त्या शास्त्रानुगतयुक्त्येत्यर्थः । सा चेयं एकस्य गुणस्य सुखदुःखाद्यात्मकत्वे गुणत्रयाभ्युपगमस्य वैफल्यमिति । प्रकाशप्रवृत्तिनियमेष्वेकः क्रमः प्रीत्यप्रीतिविषादेषु क्रमान्तरमिति कल्पने गौरवं चेति । प्रकाशप्रवृत्तिनियमेषु तम आदिक्रमो न संभवत्येव परग्रन्थविरोधप्रसङ्गादित्यन्वयः। तन्त्रयुक्त्या तन्त्रतान्यायेन तन्त्रता च अनेकमुद्दिश्य सकृत्प्रवृत्तिरिति। सकृदनुष्ठानेनैव सर्वोपकार इति प्रकृते उत्तरत्रान्वेतव्यानां सत्त्वादीनां सकृदनुष्ठानलक्षण एवोभयत्रोपकार इति परः । तन्त्राद्युक्त्या अप्रतिषिद्धं परमतमनुमतं भवतीति युक्त्या । तथा च स्मृतिप्रभृतिशास्त्रान्तरप्रसिद्धं सत्त्वादीनां प्रीत्यादिरूपत्वं अत्र ग्रहीतव्यमित्यपरः । यथासंख्यं समानानामनुदेशरूपं वेदितव्यं ज्ञातव्यम् । योग्यक्रमेणैवान्वय इति भावः । तदेव स्पष्टयति एतदुक्तमिति ।

( ४ )ये तु—ख्येयम् ।आत्मशब्दोपादानस्य फलं परमतखण्डनव्याजेनाह ये त्विति । बौद्धविशेषा इत्यर्थः । एते अभावमुखेनैव वस्तु निर्दिशन्ति । एतन्मते अनीलव्यावृत्तत्वमेव नीलत्वं न तु नीलत्वात्मकः कश्चिद्भावपदार्थ इति । एतदेव अतद्व्यावृत्त्यात्मकः अपोहरूप इति । अतिरिच्यते अत्यन्तं भिद्यते । ये प्रीत्यप्रीत्योरन्योन्याभाववादिनः तान् प्रति तानुद्दिश्य भावाभावयोर्वैचित्र्यमभ्युपगम्य तन्मतं निराकर्तुमित्यर्थः । आत्मग्रहणं आत्मशब्दोपन्यासः । नन्वात्मग्रहणेऽपि कथमितरेतराभावनिरास इत्याह नेतरेति । सुखादयः न परस्पराभावस्वरूपाः । अपि तु किन्तु भावस्वरूपाः । अत्र हेतुमाह आत्मशब्दस्येति । भावेति । भावं वक्तीति भाववचनः । तस्य भावस्तस्मात् सत्ताप्रतिपादकत्वादित्यर्थः । प्रीत्यप्रीतिविषादात्मका इत्यत्र प्रीतिश्चाप्रीतिश्च विषादश्चेति द्वन्द्वः । ते आत्मानः स्वभावा येषामिति बहुव्रीहिः । द्वन्द्वात्परः श्रूयमाणः प्रत्येकमभिसम्बध्यत इति आत्मना सह प्रत्येकं सम्बन्धः । तमेव दर्शयति प्रीतिरात्मेति । भावः सत्ता स्वभावः । प्रीतिरात्मा यस्येति वक्तव्ये येषामिति बहुवचनं प्रीत्यादीनां सर्वेषां बोधसूचनाय गौरवसूचनाय वा । एवमन्यादिति ।

भावरूपता चैषामनुभवसिद्धा । परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः । स्वरूपमेषामुक्त्वा प्रयोजनमाह प्रकाशप्रवृत्तिनियमार्थाः । अत्रापि यथासंख्यमेव । रजः प्रवर्तकत्वात् सर्वत्र लघु सत्त्वं प्रवर्तयेद्यदि तमसा गुरुणा न नियम्येत । तमोनियतं तु क्वचिदेव प्रवर्तयतीति भवति तमो नियमार्थम् । ( ५ )

प्रयोजनमुक्त्वा क्रियामाह अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च । वृत्तिः क्रिया सा च प्रत्येकमभिसंबध्यते । अन्योन्याभिभववृत्तयः एषामन्यतमेनार्थवशादुद्भूतेन अन्यदभिभूयते । तथा हि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्वतमसी अभिभूय घोरां एवं तमः सत्त्वरजसी अभिभूय मूढामिति । ( ६ )

---

अप्रीतिरात्मा भावो येषां ते अप्रीत्यात्मानः एवं विषादः आत्मा भावो येषां ते विषादात्मानः इति । व्याख्येयं व्याख्यातव्यम् ।

( ५ ) भाव—मार्थम् । एषां भावरूपत्वे किं मानमित्याह भावरूपता चेति । चशब्दः किन्त्वित्यर्थे । एषां प्रीत्यादीनाम् । अनुभवसिद्धा प्रतीतिसिद्धा । अभावरूपत्वे दोषमाह परस्पराभावेति । परस्पराश्रयापत्तिः इतरेतराश्रयापत्तिः । सा च परस्परापेक्षित्वरूपा तदा अप्रीतिज्ञानं प्रीतिज्ञानसापेक्षं भवतीति परस्पराश्रयः । दुःखसिद्धौ तदभावात्मकसुखसिद्धिः एवं सुखसिद्धौ तदभावात्मकदुःखसिद्धिरिति परस्पराश्रयित्वेन एकस्यासिद्धौ उभयासिद्धिरिति । प्रकाशेति । प्रकाशश्च प्रवृत्तिश्च नियमश्चार्थो येषां ते तथाविधाः । सत्त्वं प्रकाशार्थं रजः प्रवृत्त्यर्थं तमो नियमार्थमिति गुणानां प्रकाशादिप्रयोजनकत्वमुक्तम् । अत्रापि प्रयोजनेऽपि । यथासंख्यमिति प्रकाशः सत्त्वस्य क्रिया रजसः नियमः ( स्थगनं ) तमस इति सबन्धः । तथा च सत्त्वस्य प्रकाशकत्वं रजसः प्रवर्तकत्वं तमसो नियामकत्वं लक्षणं सूच्यते । प्रवर्तयेत् चालयेत् । नियम्येत निवार्येत ।

( ६ ) प्रयो–मूढामिति । अन्योन्येति । अभिभवश्च आश्रयश्च जननं च मिथुनं चेति द्वन्द्वः । अन्योन्यं अभिभवाश्रयजननमिथुनं वृत्तिः ( क्रिया ) येषां ते तादृशाः । द्वन्द्वात्परः श्रूयमाणः प्रत्येकमभिसम्बध्यत इति वृत्त्या सर्वेषां सम्बन्धः । एषां सत्त्वादिगुणत्रयाणाम् । अन्यतमेन एकेन । अर्थवशात् पुरुषप्रयोजनवशात् । उद्भूतेन फलोन्मुखेन अन्यतमं अपरं गुणजातं अभिभूयते हीनबलं निश्चेष्टं क्रियते । एतदेव

अन्योन्याश्रयवृत्तयः यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः। तथा हि। सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसी प्रकाशेनोपकरोति। रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरेतरयोः। तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरेतरयोरिति। (७)

अन्योन्यजननवृत्तयः। अन्यतमोऽन्यतमं जनयति जननं च परिणामः। स च गुणानां सदृशरूपः। अत एव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात्। नाप्यनित्यत्वं तत्त्वान्तरे लयाभावात्। (८)

---

स्पष्टयति तथा हीति। शान्तां प्रसादस्वरूपाम्। प्रतिलभते बलवत्त्वेन प्राप्नोति। घोरां मूढां चेत्यनन्तरं आत्मनो वृत्तिं लभत इति पूर्वेणान्वयः।

(७) अन्योन्या—रिति। ननु सर्वेषामेव गुणानां प्राधान्यात् कथमाश्रयाश्रयिभावो घटते इत्याह यद्यपीति। यदपेक्षया यत्साहाय्येन। सः साहाय्यकारी। तस्य क्रियावतः। उक्तमेव स्पष्टयति तथा हीति। प्रवृत्तिनियमाविति। प्रवृत्तिश्च नियमश्च तौ। प्रवृत्तिश्चलनं रजसः कार्यं नियमः स्थगनं तमसः कार्यम् एतौ आश्रित्य अवलम्ब्य अपेक्ष्येत्यर्थः। सत्त्वं स्वगुणप्रकाशेन रजस्तमसी उपकरोति। रजस्तमसोरिति पाठे प्रत्यनूपेभ्यः करोतेः कर्मणीति षष्ठी बोद्धव्या। इतरयोः सत्त्वतमसोः इतरयोः सत्त्वरजसोः उभयत्र उपकरोतीति पूर्वेणान्वयः।

(८) अन्यो—भावात्। ननु अन्योन्यजननवृत्तित्वे अव्यक्तानां गुणानां व्यक्तलक्षणहेतुत्वापत्तिरिति जननशब्दस्यार्थान्तरमाह। जननं चेति। चः किन्त्वर्थे किमायातमेतेनेत्याह स चेति। परिणामश्चेत्यर्थः। सदृशरूपः स्वस्वरूपः। तथा च सत्त्वं सत्त्वेन रजो रजसा तमस्तमसा परिणतं भवति न तु विसदृशं परिणमति। एकस्य सदृशपरिणामे इतरयोः सहकारित्वमात्रमिति। गुणत्रयस्यैतदवस्थात्रयावलम्बनेनैव ग्रन्थान्तरे अष्टाविंशतितत्त्ववार्ता कीर्तिता। एतन्मते एष परिणामः न गुणत्रयात्स्वतन्त्रः भिन्न इति ध्येयम्। तत एव सदृशपरिणामादेव। न हेतुमत्त्वं हेतुमत्त्वरूपं व्यक्तसाधर्म्यं अव्यक्तेनातिव्याप्तमित्यर्थः। तत्त्वान्तरेति। अन्यत् तत्त्वं तत्त्वान्तरम्। अयमाशयः तत्त्वान्तरपरिणामवत्त्वरूपं हेतुमत्त्वमेव व्यक्तानामुक्तम्। एषां तु स्वात्मकपरिणामान्न तथेति। ननु मास्तु हेतुमत्त्वं किन्तु व्यक्तलक्षणमनित्यत्वमत्रापि प्रसज्येत इत्याह नापीति। व्यक्ते उपदिष्टं एषां तु स्वस्मिन्नेव लय इति तत्त्वान्तरलयविरहात् न तथाविधमनित्यत्वमिति भावः।

श्रीशिवः शरणम् ।

# प्रत्यक्षग्राह्यः पारलौकिक आत्मा !!!

शीर्षकमेतदवलोकमाना विस्मयस्तिमितमानसा भवेयुः संस्कृतचन्द्रिकायाः पाठकमहाभागाः । किन्तु नास्ति किल किमप्यगोचरो नाम कालस्य । अयं हि संदर्शयत्यदृष्टचराणि वस्तूनि श्रावयति चाश्रुतचराणि वचनानीति । बहुशः किलैतच्छ्रूयते ये वै केचनास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति इत्यादि । प्रतीयते च वचनेभ्य एवंविधेभ्यो यदस्ति कश्चित्प्राणिनामपरो देहो यः किल विनष्टेऽपि स्थूलेऽस्मिन् शरीरे सुकृतदुष्कृताद्युपभोगाय परं लोकं प्रयातीति । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् इत्यादिभिश्च भारतादिगतैर्वचनैरभिधीयते परिमाणमेतस्य । शरीरं चैतल्लिङ्गमिति सूक्ष्ममिति चाभिधीयते दार्शनिकैः । यथा श्रीमद्विद्यारण्यपूज्यपादप्रणीते पञ्चदशप्रकरणे ।

**बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया ।**
**शरीरं सप्तदशाभिः सूक्ष्मं तल्लिङ्गमुच्यते ॥ इति ॥ ( १—२३ )**

सांख्याः पुनः प्राणपञ्चकस्थाने भूतपञ्चकमहङ्कारं चाधिकं विनिवेश्याष्टादशभिः सूक्ष्मं शरीरमुपजायत इत्याहुः । यथा

**सप्तदशैकं लिङ्गम् ॥ ३।९ इति ।**

सप्तदश चैकं चेत्यष्टादश तत्त्वानि तानि लिङ्गशरीरमित्यर्थः । तानि चोपरिनिर्दिष्टान्येवेति । प्रत्यक्षीकृत्यैव चैतदभिहितं मुनिभिः । ऊर्ध्वस्त्रोतसो ह्येतेऽस्मादृशामप्रत्यक्षमप्यर्थं योगबलात्प्रत्यक्षीकुर्वन्ति स्मेति । अत एव च प्रमाणीकुर्वन्त्यमीभिरुदीरितमर्थं श्रद्धालवः । अश्रद्धाकवलितानां तु स्थान एवात्र सन्देहोन्मेषो हैतुकानां ज्ञानलवदुर्विदग्धानाम् । अत एव चोक्तं स्थूलतमदृशा लौकायतिकेन ।

**"देहाद्भिन्नोऽस्ति चेदात्मा कुम्भवद्दृश्यतां पुरः॥ इति ।**
**न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ॥ इति च ।**

किन्तु सोऽयं चार्वाको यदीदानीमभविष्यत् तदा समवेक्ष्य श्रुतिषु श्रूयमाणस्य पुराणेषु च प्रोच्यमानस्य प्राणिनां पारलौकिकस्यात्मनोऽस्तित्वं न जानीमः किं वा प्रत्यपत्स्यतेति। नूनं सोऽयमपि जितं जितं मुनिमतेनेत्येवावक्ष्यदिति प्रतीयते।

यदेतत्पुरा प्रत्यक्षीकृतं यौगिक्या दृशा मुनिप्रवरैस्तदेवेदानीं शक्यते चक्षुषा ग्रहीतुं सूक्ष्मं शरीरं सर्वैः कयाऽपि विज्ञानावलम्बिन्या युक्त्या। प्रत्यक्षीकृतं चैतद्बहुभिरेवामेरिकाप्रदेशवास्तव्यैर्वैज्ञानिकैः। यथा चैतत्तथा विवृतं सरस्वत्या नाम हिन्दीपात्रिकया। तदवलम्ब्यैव च प्रवर्तामहे वयमेतच्चन्द्रिकायाः प्रणयिनोऽवबोधयितुम्।

विदित एवेदानीं प्रायेणाशेषाणामप्यक्षरमुखानाममेरिकाख्यो देशः। यत्र किल प्रत्यहं नवनवा आविष्काराः समधिगतजन्मानो विस्मापयन्ति भूतलवर्तिनो मनुजान्। तत्र चास्ति मण्डलं मासाचूसेट्संज्ञम्। विद्योतते चैतन्मण्डलान्तःपातिनश्चविसंचिनाम्नः स्थानान्नातिदूरे विज्ञानशाला कापि। अस्याश्च प्रधानाध्यक्षः श्रीमान् एल्मरगेट्स् नामा कोऽपि महाभागः। अस्मिंश्च विज्ञानमन्दिर आध्यात्मिकानुसन्धानविषयका नानाविधा व्यापाराः प्रवर्तन्ते।

सम्प्रति किल सोऽयमध्यापको गेट्सूमहाभागः सूक्ष्मतमानि कान्यपि प्रकाशकिरणान्यनुसन्धातुं प्रयतते। अनुसन्धानं चैतदात्मना संबद्धमिति श्रूयते। अतीतः किल भूयान् समयः कर्मण्यत्र प्रवर्तमानस्यामुष्य महाभागस्य। अनेन चानुसन्धीयमाना अमी किरणाः कृष्णलोहिता वर्णेन। यथा किल यक्षरजः ( x-roys ) संज्ञा रश्मय एवमेवैते किरणा इति किल वैज्ञानिकाः संमन्यन्ते। किन्तु क्वचित्क्वचित्कार्येष्वेषां यक्षरजस्तस्तावान्भेदो यावान्ध्वनित इत्यपि तेषां सिद्धान्तः। न किल तमसि प्रत्यक्षीकर्तुं शक्यते केनापि दीप्तिरेतेषां किरणानाम्। अशक्तं हि तद्ग्रहणे सहकारिविशेषासहकृतं केवलं चक्षुरिति। यश्चात्र समपेक्ष्यते सहकारी सोऽयमिदानीं समनुसन्धायोपस्थापितो गेट्सूमहाभागेनेति सुखमेवेदानीं शक्यते तत्साहाय्येन किरणानाममीषां दीप्तिरध्यक्षयितुम्। अस्ति किल किमपि वस्तु येनोपलिप्ते कुड्ये संक्रान्ताः किरणा एते चक्षुषा गृह्यन्ते। वस्तु चैतद्रूढोपश्री ( रोडापसीन ) त्यभिधीयते तज्ज्ञैः। एतन्मूलिकैवाक्ष्णोर्दर्शनशक्तिरित्याचक्षते

विद्वांसः । नास्ति किल वस्तुनोऽस्य प्रतिभटायमानमन्यात्किमपि यन्नैवं प्रभवेत्संग्रहीतुं किरणान् । अनेनैव कुड्योपलिप्तेन प्रत्यक्षीचकार किरणजालमुपरिनिर्दिष्टं गेट्स्महाभागः । द्रव्यमिदं सद्योहतानां पशूनामक्षिभ्यः संगृह्यते गेट्स्महाभागेन । यावन्ति नाम निश्चेतनानि निरिन्द्रियाणि च वस्तूनि निःशेषाण्यपि तान्यमीषां किरणानां संपर्कतः स्फटिकवत्पारदर्शकतामापद्यन्ते । भवन्तु नाम पाषाणाः सन्तु नाम धातवो विद्यन्तां नाम वा काष्ठानि किरणानि किलैतानि निर्बाधमेव संक्रम्यामीषामभ्यन्तरे प्रकाशन्ते । किरणान्येतानि यस्या नलिकाया निर्गच्छन्ति तस्याश्च प्रोक्तपूर्वेण रूढोपश्रिद्रव्येणोपलिप्तस्य च कुड्यस्याभ्यन्तरे यानि नाम निश्चेतनानि वस्तूनि भवेयुरशेषाण्यपि तान्येवमेव पारदर्शितामुपयान्ति । एवमपि न भिद्यते कुड्यादीनां वर्णो नापि वान्यः कश्चिदप्यन्यथाभावो भवति विनैकं पारदर्शित्वम् । ये पुनश्चेतनावन्तो नैतेऽमीषां सम्पर्कतः पारदर्शिनः सम्पद्यन्ते । असमर्थानि खल्वेतानि तेषां पारदर्शकतापादन इति । यदि रूढोपश्रिदिग्धे कुड्ये संक्रान्तेष्वेतेषु किरणेष्वन्तरा कश्चिच्चेतनावाननुपतिष्ठेत्तदा तदात्व एवास्य छाया कुड्ये प्रादुर्भवति शक्यते च संद्रष्टुम् । यावच्च सजीवोऽयमन्तरागतो देही नियतमेव तावदवतिष्ठतेऽसौ च्छाया । परासुतामुपगते तु तत्र देहः पारदर्शी भवति । तदेतदनेकशः प्रत्यक्षीकृतं गेट्समहोदयेन । तथा हि । कदाचित्कस्यांचित्काचनलिकायां विनिवेश्य कोऽपि मूषको रूढोपश्रिप्रदिग्धभित्तिसंक्रान्तानां किरणानामेषां मध्येऽवस्थापितः । ततो यावदसौ न व्ययुज्यत प्राणैस्तावत्समदृश्यत कुड्येऽस्य च्छाया । यदा पुनः सोऽयं व्यपेतप्राणः समभूत्तदा युगपदेव सम्पन्नं पारदर्शि वदनमेतस्य क्रमशश्चान्यान्यपि गात्राणि । अवसरे चास्मिन्नवालोकि किमप्यद्भुतमपरैरपि कैश्चिदध्यापकैरनुगतेन गेट्स्महाभागेन । तद्यथा । यदा किल मूषकोऽयं पर्यत्याजि चेतनया तत्समकालमेव तत्समानाकारैव कापि छाया नलिकातो विनिर्गत्य कुड्यसन्निहितेन प्रदेशेनोर्ध्वं गच्छन्ती कियद्दूरमतिक्रम्यान्तरधात् । निपुणतरं च विस्पष्टं च प्रत्यक्षीकृतेयं गेट्समहोदयसन्निहितैरपरैरपि वैज्ञानिकैः । आसीच्च तदानीमप्येषोर्ध्वमेव गच्छन्तीत्यहो प्रभावो विज्ञानस्य । प्रियपाठकाः ! सोऽयममेव सूक्ष्मशरीराख्यः पारलौकिक आत्मा ॥

अत्रेयं स्वत एव शङ्का समुदेति यत्कुतो वा किरणैरमीभिः परासोरेव प्राणिनः शरीरं पारदर्शितामापद्यते कुतश्च न चेतनाविशिष्टस्येति । सेयमपि समाहिता

वैज्ञानिकप्रकाण्डेन गेट्स्महोदयेन प्रयोगान्तरमुद्भाव्य। तथा हि। कदाचिद्वैज्ञानिकप्रवीरेणामुना कस्मिंश्चिदपवरके सीसकमयं वितानं निरमायि समयोजि चैतत्तन्त्रीद्वारा भूम्या। तन्त्र्यां चास्यां समवस्थापितं किमपि विद्युन्मापकं यन्त्रमेतेने यत्किल प्राणिनां वदनतो विनिर्गता विद्युच्छटाः पर्यमिनोत्। विधाय चैवं प्रमाणपुरःसरमेव संसाधितमेतेन यद्वदनस्य यो यो भागो या या वा शिरा यो यश्च वा ज्ञानतन्तुः कर्मणि व्यापार्यते तस्मात्तस्माद्विद्युतो धारा प्रस्यन्दितुमारभते। यदि कश्चिदात्मनो भुजलतामुद्यच्छेदवष्टम्भयेच्चैनामायतीकृत्य तदाऽवनतावस्थापेक्षयाऽधिकैव विद्युदस्याः प्रस्यन्देत। मानसव्यापारोपक्रमेऽर्थात्कस्मिंश्चिदपि वस्तुनि विचिन्त्यमानेऽपि विनिःसरति वैद्युतं तेजस्तच्च समीपवर्तिनि समीरमण्डले समाहन्यते। एतेनैव चापरेषां मानसव्यापारमुन्नेतुं प्रभवन्ति वैज्ञानिकाः। एवं व्यापारिते तत्र तत्र कर्मणि तस्मिंस्तस्मिन्वदनगते भागे ज्ञानतन्तौ च सविशेषमेव निःसरन्ति वैद्युता रश्मयो निखिलानामपि प्राणिनां देहेभ्यः। गेट्स्महोदयेनानुसंहिताः पुना रश्मयोऽतिमात्रं लघवः शनैः सञ्चारिणश्चेति नैत आत्मनः समधिकप्रकाशस्य श्यामलस्य च वैद्युतकिरणजालस्याभ्यन्तरे प्रवेष्टुं प्रभवन्ति। सचेतनाश्च प्राणिनस्तथाविधेनैव वैद्युतरश्मिजालेन सम्पन्नाः संलक्ष्यन्ते येषु गेटस्महोदयेनानुसंहिता रश्मयः प्रसरं न विन्दान्ति। अत एव च चेतनावति मूषके न प्रासरन्नेते प्रासरन्नेव पुनः परेतस्यास्य देह इति। इदमेव च जीवतो मूषकस्य पारदर्शित्वाभावे मृतस्य च पारदर्शित्वे निदानमिति।

प्रियपाठकमहाभागाः! सन्दृश्यतां प्रभावोऽयं विज्ञानस्य येन किल स्थूलदृशामप्रत्यक्षः पारलौकिकोऽप्यात्मा नयनगोचरीक्रियते। एतदेव च लिङ्गशरीरं सूक्ष्मशरीरं चाख्यायते। एतच्च सेन्द्रियमेवेति श्रुत्यादीनां सिद्धान्तः। गेट्स्महोदयस्तु च्छायेयं सेन्द्रिया निरिन्द्रिया वेत्यनुसन्धातुं प्रयतत इति श्रूयते। सर्वथा जितं मुनिमतेनेति शिवम्।

---

## सप्रमोदमङ्गीकारः ।



विशाखपट्टननिवासिभिरय्यवरगुरुभिः पण्डितश्रीवेङ्कटरङ्गनाथशास्त्रिभिः सप्रणयमुपहारीकृतौ लघुशब्दसर्वस्यादिमौ द्वौ भागावान्ध्राक्षरमुद्रितौ सानन्दं सबहुमानं धन्यवादप्रदानपुरःसरं च स्वीक्रियेतेऽस्माभिः । महाराष्ट्रभाषामयस्य गोमान्तकप्रदेशवासिन्या कयापि योषिता सम्पाद्यमानस्य सौभाग्यसम्भारस्य प्रथमोऽङ्कश्च सानन्दमुररीक्रियते ।

## समालोचना । *



विज्ञानचिन्तामणिः—प्रतिमासं चतुः प्रचरन्ती संस्कृतभाषामयी संवादपत्रिका खल्वेषा । अस्याश्चात्मनः प्रादुर्भावेन भारतवर्षं मण्डयन्त्याः सप्तदशोऽयं वत्सरः । हृदयहारिणी किलात्रत्या भाषासरणिः । सम्पादकः पुनरस्याः पण्डितप्रकाण्डः श्रीमान् पुन्नश्शेरिनम्पिश्रीनीलकण्ठशास्त्रिमहाभागः । अस्यां च नानाविधाः सामयिका विषयाः सरसमधुरया संस्कृतभाषया संग्रथिताः प्रकाश्यन्ते । प्रतिसंख्यं च तत्तद्देशवास्तव्यानां तेषां तेषां पण्डितानां समस्यापूरणानि प्रकटीक्रियन्ते । प्रादुष्क्रियन्ते च चतुरचेतसामाल्हादकाश्चित्रप्रश्नाः । अन्ततश्च संक्षिप्तो जगद्वृत्तान्तो विनिवेश्यते । विरलाः किल संस्कृतभाषामय्यः पत्रिका विरलतमाश्च साप्ताहिक्य इति नैष परोक्षः सर्वाङ्गमनोरमाया अपि संस्कृतभाषाया दैवदुर्विपाकःकस्यापि । यत्सत्यं नितान्तमेवैतदाश्चर्यास्पदं यत्त्रिंशत्कोटिमानुषाधिष्ठिते संस्कृतभाषाया ज्ञातिकुलायमानेऽप्यत्र भारते वर्षे द्वे एव

---

* अवकाशाभावादवशिष्टाः समालोचना आगामिन्यां संख्यायां प्रकाश्येरन्निति क्षम्यतां रसिकैः । स० सम्पादकः ।

साप्ताहिक्यौ संस्कृतपत्रिके स्त इति । ते अपि पुनर्नानुगृह्येते तेषु तेषु कृत्येषु वृथैव धनधाराः प्रवर्षद्भिरिति यत्सत्यं बलीयान् प्रभावः कालहतकस्य । यावच्च नारोहत्यभ्युदयं भगवती संस्कृतभाषा दूर एव तावद्दूराधिरोहिणी भारतोन्नतिप्रत्याशेति निपुणमेतदवधार्यतां प्रज्ञावद्भिः । संस्कृतभाषाभ्युदयश्च प्राधान्यतः संस्कृतपत्रिकास्वायतते । अत एव च प्रार्थयामहे रसिकान्यदवश्यं संगृह्य चिन्तामणिं प्रकाश्यतां संस्कृतभाषागतमात्मनो निर्व्याजं प्रेमेति । वार्षिकमस्य मूल्यं रूप्यकचतुष्टयं षाण्मासिकं तु रूप्यकद्वितयम् । जिघृक्षुभिः पत्रादिकं Punnashsherinampi Shri Nilakanth Shastri. Editor Vijnanachintamani, Pattambi. Malabar इत्यत्र प्रेर्यम् ।

---

# संवादसंग्रहः

## सम्पादकीयाभिप्रायश्च ।

## News and Notes.

मासे किलास्मिन्प्राधानिकी घटना नाम भारतवर्षाधिकृतस्य भारतवर्षीयानस्मांस्तृणाय मन्यमानस्य वाङ्मात्रोदारस्य वङ्गविच्छेदकृतार्थात्मनः प्रजानुरागानास्पदस्य प्रकृतिप्रक्षोभदावानलानिलायमानस्य लार्डकरधनस्य भारताधिकारत्यागः । यः किल सुदूरमारोहति सोऽयमवश्यं पतति । तदेतदुच्यतेऽभियुक्तैः गतिः सोच्छ्रायाणां पतनमनुकूलं कलयतीति । अत्यारूढः पतति ध्रुवमिति च । भारताधिकृतपदमधितिष्ठतः किल लॉर्डकरधनस्य प्रत्यासन्नप्राय इवाभवत्स्वर्गः । तत्सदृश एवायमस्य विनिपातः । दिष्ट्या सम्पादितोऽयममुष्य पदपरित्यागो भारतवर्षप्रणयिना

विधिनोति प्रमोदामहेतमाम् । सैनिकाधिकरणसम्बन्धिनि कस्मिंश्चित्कर्मणि नांशतोऽपि साफल्यमापेदे लॉर्डमहोदयस्य प्रत्याशेति परित्यक्तं भारताधिकृतपदमेतेन । निष्कारणमेव किन्नरवर्षोपगणस्थानादिषु दूतपरिषदः प्रेरणमनागःसु किन्नरवर्षीयेषु शस्त्रपातस्तज्जन्यव्ययस्य च भारतवर्षशिरस्यारोपणं भारतवर्षीयभूपानां सपरितोषं भूपतिपदपरित्यागः शिक्षणावनतिश्चेति भूयांसि किल चिरस्मरणीयानि व्यधीयन्त कर्माणि भारतवर्षं रसातलं गमयताऽनेन वावदूकेनेति नात्र सन्देहः । अतः परं चेदसाववास्थास्यत कियन्तंचित्समयं तदाऽवश्यमितोऽपि स्मरणीयतराणि कर्माणि समघटिष्यन्तेति नास्ति नः संशयो नाम । किन्तु नोत्कण्ठते नश्चेतो लीलातिशयममुष्यैवंविधमवलोकितुमित्यत एव प्रशंसामहे विधातारम् । अयि लार्डकरधनमहोदय शिवास्ते पन्थानः । गम्यतामपुनरागमनाय ।

---

लार्डकरधनेन विहितो वङ्गच्छेदस्य बीजवापः प्रादर्शयदङ्कुरं च पल्लवांश्च फलानि चाविलम्बितमेवेति यत्सत्यं दूयन्तेतमामशेषा अपि भारतवर्षीयाः । कर्मणा पुनरेतेन नितान्तमेव प्रक्षुब्धाः सुहृद्विच्छेदकातरा वङ्गीयाः । वङ्गविच्छेदोऽयमेकान्तत एव हृदयविदारको भारतीयानामिति निःसन्देहमेवेदम् । अत एव स्थाने किलायमत्र वङ्गीयानां संरम्भः । प्रमोमुद्यामहे खलु वयमावेगोऽयमेतेषां स्वदेशीयवस्तुमात्रस्वीकारपुरःसरं परदेशीयवस्तुस्वीकरणप्रतिषेधात्मना परिणत इति । एतदर्थं च भूयांस एव श्रीलाः स्वदेशीयवस्तुनिर्माणकार्यालयानवस्थापयितुमुद्युक्ताः । सशपथमेव प्रत्यज्ञायि स्वदेशीयमात्रवस्तुस्वीकारः परोलक्षैः पुरुषैः । तेषु तेषु च प्रदेशेष्वनुक्रियते वङ्गीयानामेतत्प्रशस्यतममाचरितं भारतवर्षीयैः । मा तावत्कथंचिदप्यापद्यतां शैथिल्यममीषामिदं प्रतिज्ञातमिति प्रार्थयामहे भगवन्तं साञ्जलिबन्धम् । स्वदेशीयवस्तुस्वीकारकामुकैः पुनरेतैः प्रथमत एव सुदूरमुत्सार्यन्तां वैदेशिकभेषजानीति च विज्ञाप्यतेऽस्माभिः । यानि हि नाम भारतीयसंपदो विदेशसंक्रमद्वाराणि तेष्वन्यतमं प्रधानं धर्मोध्वंसनधुरंधरं च वैदेशिकभेषजाभिधानमेवेति निपुणमवधार्यतामेतत् ।

---

यथा नगरान्तरेष्वेवं कोल्हापुरेऽपि व-

ङ्गीयबन्धूनामाचरितस्यानुमोदनाय वैदेशिकवस्तुप्रतिषेधाय च महीयसी सभा समुद्भूता । निरचायि चात्र निखिलैः सर्वथा वैदेशिकवस्तुपरित्याग इति संतुष्यामः । सर्वथा वैदेशिकवस्तुस्वीकारे यथा सम्पदेवं धर्मोऽपि भारतीयानां नामशेषतामुपयाति । वैदेशिकशर्करादिषु ह्यवश्यमस्थ्यङ्गाराणां सम्पर्को भवति स च पातित्यापादक इति साधितमेवेदमस्माभिः प्राक् ।

---

कोल्हापुरमहाराजो न क्षत्रियः परन्तु शूद्र एव । तस्य च वैदिकमन्त्रैः संस्कारादिकरणे जगद्गुरुणा प्रदत्तो निर्णयः सर्वथा शास्त्रविरुद्ध एवेति वाईक्षेत्रस्थैः पण्डितैर्निरणायि । संकेश्वरपीठवर्तिनो वृद्धजगद्गुरवोऽपि कनीयसा गुरुणा प्रदत्तं निर्णयं नानुमन्यन्ते । अत एव च तैर्यथाऽस्मदादेशं यावद्वैदिकैर्मन्त्रैः कोल्हापुरराजस्य कर्मसु वैदिका मन्त्रा न विनियोज्येरंस्तथाऽवधीयतामिति भाद्रसुदि षष्ठ्यामाज्ञप्तः कनीयान् गुरुः(?) इति कश्चिदाप्तो निवेदयति । प्रशस्यतममेवैतादिति नात्र सन्देहः । किन्तु गुरोरस्य प्रायश्चित्तार्हत्वात्तदपि निर्देष्टव्यमनुष्ठाप्यं च वृद्धजगद्गुरुभिर्येन सविशेषमेवाभिवर्धेत प्रजानां श्रद्धा श्रीजगद्गुरुपादेष्विति प्रार्थ्यतेऽस्माभिः । जगद्गुरुपीठविषयेऽप्यवश्यं किमपि लेखिष्यामोऽधिगतावसराः ।

---

संवृत्तः किलान्ततो जयप्राणीयरोषायणीययोः सन्धिः । अत्र च भूयसीं हानिमुररीकृत्यापि स्वीचकार सन्धिं विजयी जयप्राणाधिपतिरिति यत्सत्यमतिमात्रमेवेदमनुरूपं वीरव्रतस्य । यशोधनानां द्रविणेन कोऽर्थः । नैव खल्वेवंविधः सङ्ग्रामः संवृत्तपूर्वः क्वापि नापि संदृष्टपूर्वा जयप्राणीयसदृशा वीरप्रकाण्डा नाध्यक्षीकृतचरी चैवंविधा विजयश्रीरिति नूनं लोकोत्तर एव प्रभावो जयप्राणीयानाम् । सर्वथा विजयन्तां जयप्राणीयाः ।

---

अस्मिन्नपि वत्सरे तत्रतत्र प्रवर्तमानः श्रीमद्वेतण्डतुण्डार्हणामहोत्सवः समानन्दयति भारतवर्षीयान् ।

---

कोल्हापुरविभागे नांशतोऽपि वर्षति देवो न लभ्यते पानीयं प्लुष्टप्रायशस्यानि निःश्रीकाणि च क्षेत्राणि प्रत्यासन्नप्रायश्च ग्रन्थिज्वरहतकोऽपीत्यहो दुर्भाग्यपरम्पराऽत्रत्यानाम् ।

---

# संकेश्वरजगद्गुरुनिर्णये

## पण्डिताभिप्रायाः ।

No. 128.

१ कैरविणी ( मद्रास् )

४।९।०९.

निर्माय निर्मायमशेषलोकान्वेदोपदेशेन च वृत्तिमेषाम् ।
श्वश्रेयसं च प्रणयन् परात्मा नारायणो वः शिवतातिरस्तु ॥१॥

अयि महाशयाः ! समवधत्त साम्प्रतमविशेषज्ञस्यापि किशोरस्य मम सनातनधर्मनिर्मूलनवार्ताश्रवणसंभ्रमप्रसृतामिमां कामपि संक्षिप्तरचनां वचनावलीम् । पुरा किल प्रसभमाक्रान्तेषु भुवनेषु चार्वाकसुगतक्षपणककणभुगक्षचरणप्रभृतिमतपक्षपातिभिर्विलुप्तवेदासिद्धान्तपथेषु क्रमेण बहुलपक्षक्षपाकरवत्क्षयमासेदुषि प्राचीनार्यधर्मे बहुलीभवति जगदन्धङ्करणपारीणमहिम्नि समेधितजडिम्नि महत्यन्धकारेऽन्तर्बहिश्च विष्वगपरिमृष्टसमविषमभागमवधूतस्वपरविवेकमनिश्चितरूपजातिभेदं च पथः स्खलिताः केचन परे पर्यभ्रश्यन्त कतिचन केवलमपरिमुषितप्राचीनसंस्थानप्रत्यभिज्ञाः सहस्तपरिमर्शमितस्ततो निरूपयन्तः परस्परहस्तावलम्बविभवेनाचङ्क्रम्यन्त इति नैतदविदितमास्तिकानाम् । तदीदृशीं निर्धार्यैव हि भाविनीं दशामपारकृपावशंवदान्तरङ्गा मुनयस्तत्कल्पाश्च श्रीमच्छङ्कररामानुजभगवत्पादाद्याचार्याः परमपुरुषार्थलक्षणं मोक्षसाम्राज्यमस्माँल्लम्भयितुं तत्रभवता बादरायणमुनिना संदृब्धानि शारीरसूत्राणि व्याचख्युः । यद्यपि तेष्वेव जाग्रति बहुलं विप्रतिपत्तयस्तथापि विषयान्तरनिरूपणे प्रवृत्ता वयं निवृत्ता एव परत इति न तदिह प्रस्तुमः । अथापि प्रधानेषु विषयेषु बहुषु न तावानस्ति मिथो भेदः । यतः पारमार्थिकेन व्यावहारिकेण वा भेदेन वर्णाश्रमविहितानि नातिलङ्घनीयानि कर्माणि भविभिरामोक्षादितीदमखिलसम्मतम् । इदं च सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदित्यादिसूत्रभाष्यप्रकरणे स्फुटम् । अस्तु कामं यज्ञेनेत्यादिवाक्यविहितानां यज्ञदानादीनां विविदिषायां तत्फले वेदने वोपयोग इति कश्चिदवान्तरविशेषः । न तावता काऽप्यतिप्रसक्तिः । यत्सर्वेषामपि जायत एवैकरूप्यमनुष्ठानेषु । अत एव च स्वाराज्यसिद्धाविदमधिकृत्य यज्ञेने-

त्यादिवाक्याद्भवतु विविदिषा वेदनं तत्फलं वेति दृश्यतेऽभ्युपगम्यवादः । इत्थं वैदिकधर्मानुष्ठाने प्रतिष्ठापितेऽपि ग्रन्थमुखेन तत्परामर्शविषये शक्तिविकलाना-मलसानामभ्यर्हितमुपदेष्टुमेव ते कांश्चन स्वान्तेवासिनः परीक्षितभक्तीन्प्रत्यष्ठाप-यन् । तैश्च यथाशक्तमेतदवधि प्रवर्त्यन्त एव प्राचीनाचाराः । तथापि तेषा-मितरानिर्बन्धे शक्तिविरहान्नास्तिक्यातिरेकनिदानत्वात्कलिहतस्य भवितव्यतया च सम्प्रति सङ्कुचन्ति सदाचाराः । प्रतायन्ते च दुराचरितानि । ईदृशेऽपि कोलाहले यत्र क्वचन प्रवर्तमानानि धर्मकार्याणि तु प्राचां वैभवादित्येव मन्यामहे। इत्थमैकमत्येन प्रतिषेधत्सु महत्स्वपीयमवस्था धर्मस्येति स्थिते केषांचित्सामन्तानां धर्मविरोधिनियमनिर्माणकदर्थना तु भूयसीमनुतापसन्ततिमावहति धर्ममर्मविदां हृदयेषु । आस्तां नाम तदपि रजोदूषितदृशां सततमपरिशीलितशास्त्रमार्गाणां मुधा-वशित्वविडम्बनात्तगन्धानामन्धानाम् । यत्ततोऽपि विषममिदमनुश्रूयते विशिष्य शिष्यप्रदेयोपदेशाः केचिदद्यतनाः प्राचीनशङ्कराचार्यमठान्तःपातिनस्तदन्ते-वासिव्यपदेशभाजो धर्मपालनाधिकृता एव वैदिकमन्त्रेषु लिखितपठितोद्घोषित-प्रचारितचरमनधिकारं चिराय बिभ्रतामपि तामसप्रकृतितया भगवता विगी-तानां जङ्गमश्मशानायितानामपि शूद्राणामधिकारमिदम्प्रथममुदजुघुषन्निति । हन्त तदेतदत्यन्तमरुन्तुदं नाम । कथमिमे वहन्तु शङ्करभगवत्पादव्यपदेशं तदन्तेवासितापदमाचार्यकमहाभिषेकं वा ये पुनः साक्षादेव गुरुविप्रतिषिद्धं प्रव-र्तयन्ति प्रमाद्यन्ति च धर्मसेतोः । तथा च प्रतिषेधन्ति शास्त्राणि शूद्रस्य कर्म-ब्रह्ममीमांसयोस्तपसि वेदाध्ययने वैदिके कर्मण्यपीतरत्राधिकारमिति नेदम-भिनवं किमपि विस्फारिताक्षाणां निगमेषु । **पद्यु ह वा एतच्छ्मशानं यच्छूद्रः । न स्त्रीशूद्रौ वेदमधीयाताम् । तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः । अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणमध्ययने जिह्वाच्छेदो धारणे शरीरभेद** इत्यादीनि हि वचनानि प्रतिषेधन्ति तदधिकारम् । अत एव भगवानापस्तम्बः **श्मशानवच्छूद्रपतिताविति** श्मशानवद्भावाति-देशेनानध्यायप्रयोजकतामसूत्रयत । किं च कर्मब्रह्मविचारशास्त्रयोः पूर्वोत्तरमी-मांसयोरपशूद्राधिकरणे प्रकाशितोऽयं घण्टापथः । व्याचख्युर्हि **शुगस्य तदना-दरश्रवणात्तदाद्रवणात्सूच्यते हि । क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ।** इत्यादिषु श्रुतिपठितं शूद्रशब्दं अहहा रे त्वा शूद्र तवैव सह गोभिरस्त्वित्यत्र

शोचनधर्मसम्बन्धबोधकम् । अतो विप्रतिषिद्धतममिदं यत्कारुणिकानां समदर्शिनां वा साम्प्रतिकसङ्केश्वरपीठाधिपतीनां शूद्रेभ्यो वेदमन्त्रप्रदानमित्यत्र किं वक्तव्यम् । तादृशा एव चेद्विनिपातनिदानमेतादृशं कर्माभिनिविशन्ते हन्त का वा गतिर्धर्मस्य । परेषामनेडमूकानां वा । तद्वयमपेक्षामहे तेषामत्र प्रवृत्तिहेतुं प्रमाणावष्टम्भमितरद्वा यदि ते न कुप्यन्ति यदि वा तद्विद्वत्सभाप्रवेशमर्हति । सर्वथा स्मरामो वयमनेन कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् । नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥ इत्यादिमहर्षिपरिषत्सुभाषितानाम् । यदिदमपि तदीयहृदयतोदावहमनर्चनमेव । य एवमाह-वर्णानामाश्रमाणां च व्यवस्था या कृता मया । तां ये समनुवर्तन्ते प्रसादस्तेषु मे महान् । वरं स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । श्रुतिस्मृती ममैवाज्ञे यस्तामुल्लङ्घ्य वर्तते। आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः॥ तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥ इति तदिदमेव हि-न चलति निजवर्णधर्मतो यः स्थिरमनसं तमेवहि विष्णुभक्तम् । पाषण्डिनो विकर्मस्थान्बैडालव्रतिकाञ्शठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः । स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ एवमादिवचननिचयैः परमर्षिभिः प्रकाशितमैकमत्येन । तदितः परमपि नाम मठाधिपतयोऽन्येऽपि पण्डिताः प्राचीरस्यैव कलमचर्वणे कः पालयत्विति लोकोक्तिमविस्मरन्तः स्मरन्तश्च निगमगिरां वर्तेरन्निति सादरं सप्रश्रयं सोपग्रहं सप्रणिपातमपि प्रार्थयामहे । यदाहुः आकेशग्रहणान्मित्रमनर्थेभ्यो निवर्तयेत् । इति । न चेतस्मादनर्थान्तरमुत्पश्यामो यदास्माकीनं धनमेवेदं परायत्तीक्रियते । ननु वदन्ति ब्राह्मणानां धनं वेद इति । परिपालिते चास्मिन्नितरन्न दुष्प्रलम्भमिति सम्प्रति विरमामः । इति ।

श्रीवैदिकधर्मसभायाः ( मिलापुर, मद्रास )
श्री. ति. अ. ति. कुमारतातार्यः कविभूषणः
प्रकृतसभायाः पण्डितः पोषको निर्वोढा च ।

---

२

## शास्त्रमुक्तावलीमञ्जुभाषिण्यादिसंपादकस्य

( प्रतिवादिभयंकरश्रीअनन्ताचार्यस्य )

### जगद्गुरुपीठपतिः ।

शंकराचार्यपीठस्थास्सर्वेपि जगद्गुरुपदेन व्यवह्रियन्ते । बेलगाममण्डले संकेश्वरस्थलेपि कोपि पीठ एतादृशो वर्तते । तदध्यक्ष इदानीं सद्य एव सर्वतः प्रथां प्रतिपद्यत इत्यहो प्रभावः प्रकारस्य ।

कोल्हापुरे नरपतिः कोपि वर्तते । तद्वंशजाः पूर्वे सर्वे पुरुषाश्शूद्रवत्पौराणिकैरेव मन्त्रैर्वैदिकेषु कर्मसु सश्रद्धमवर्तन्त । अद्यत्वे च तेषां वैदिकमन्त्रश्रद्धा समुद्भूत् । तैरेव क्रियाः कार्या इति राजा राजबन्धवश्चागृह्णन् । असंमन्यमानाश्चात्र ब्राह्मणा जीविकाविलोपेन दरिद्रतां गमिताः ।

राजोपाध्यायश्च श्रीमान् नारायणरायमहाशय इदंराजपूर्वपुरुषैर्वितीर्णया भूसंपत्त्या प्रतिवर्षं पंचविंशतिसहस्ररूप्या यथा सुखेन वर्तमानः पक्षमेनमननुमन्यमानो जीविकापहारेण निःस्वीकृतः । प्रतिमासश्च २५० रूप्यकाणां दानेनान्यः कोपि धृष्टमतिः जोशीरायनामा तत्पदे प्रतिष्ठापितश्च ।

एवं स्थिते राजायं क्षत्रिय इति ततश्च वेदमन्त्रैरस्य क्रियाकारणं न विगीतमिति च तेन श्रीमता संकेश्वरपीठपतिना निर्णयोऽदायि । एतेन राजपक्षीयाणां जातिसंकरप्रणयिनां प्राचीनाचारपरिपालनव्यसनिनां महताश्च गोष्ठीषु महात्मनोऽस्य नाम बहुश उद्घुष्यत इति ' येनकेन प्रकारेण प्रसिद्धः पुरुषो भवे ' दित्यत्र सोयं नितरां पक्षे पततीति मन्यामहे ।

---

### कोल्हापुरनरेशः ।

सोयं सुगृहीतनाम्नः शिवराजतस्संप्रवृत्ते सप्ततारनगराधिपतेर्वंशे समुद्भूत इति शिवराजस्योपनयनं वेदाधिकारो वा न क्वापीतिहासे प्रत्यपादीति तदनुजस्य तञ्जपुराधिपस्य वेङ्कोजिमहाशयस्य तद्वंश्यानां चाद्ययावद्वृषलता संप्रतिपद्यत एवेति सांप्रति-

१९०५ श्रीशिवः शरणम् । आक्टोबरमासस्य



शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

द्वादशखण्डस्य ] १८२७ शाकाश्विनमासस्य [ सप्तमसंख्या

श्रीगणेशाय नमः ।

## मासावतरणिका ।

सुस्नातेव 'घनाघनाम्बुविसरैर्वैमल्यमाप्ता परं
भ्राजत्तारकपुष्पराजि दधती चेतोऽपहार्यम्बरम् ।
पुष्पैर्नैकविधैर्विनिद्रमधुरैरुद्यद्रुचिर्भासते
कान्ता वाऽश्वयुजे नितान्तविलसच्चन्द्राननाऽसौ शरत् ॥

## सुभाषितानि ।

यद्वच्चन्दनसम्भवोऽपि दहनो दाहात्मकः सर्वदा ।
सम्पन्नोऽपि समुद्रवारिणि यथा प्राणान्तकृड्डुण्डुभः ।
दिव्याहारसमुद्भवोऽपि भवति व्याधिर्यथा बाधक-
स्तद्वद्दुःखकरः खलस्तनुमतां जातः कुलेऽप्युत्तमे ॥ १९ ॥

दिनमवसितं विश्रान्ताः स्म त्वया मरुकूप हे
परमुपकृतं शेषं वक्तुं ह्रिया वयमक्षमाः ।
भवतु सुकृतैरध्वन्यानामसीमजलो भवा-
न्नियमपि घनच्छाया भूयात्तवोपतटं शमी ॥ २० ॥

संभूष्यं सदपत्यवत्परकराद्रक्ष्यं च सुक्षेत्रव-
त्संशोध्यं व्रणिताङ्गवत्प्रतिदिनं वीक्ष्यं च सन्मित्रवत् ।
बध्यं बध्यवदश्लथं दृढगुणैः स्मर्यं हरेर्नामव-
न्नैवं सीदति पुस्तकं खलु कदाऽप्येतद्गुरूणां वचः ॥ २१ ॥

## वङ्गीयप्रवादानुवादाः ।

( पूर्वतोऽनुवृत्ताः )

| | |
|---|---|
| ६५ ना जाने सापेरे कामड शिखाय । | अज्ञं सर्पं दंशनं शिक्षयन्ति ॥ |
| ६६ काछे थाके याक्षण | समीपे स्थीयते यर्हि |
| आमार आमार ततक्षण | तदा मम ममेति वाक् |
| पथे गेले पोडे मन | पथिगे दूयते चेतो |
| वाडि गेले ठन् ठन् । | गृहगे ठन्ठनायते ॥ |
| ६७ समुद्रेर ढेउ देखे | दृष्ट्वा वीचिं समुद्रस्य |
| तडे आछाड खाय । | तट आस्फोटनं गतः ॥ |
| ६८ घरे आगुन दिया | गृहे दत्त्वाऽनलं तत्र |
| डगिर तले पलाय । | मञ्चनीचैः पलायत । |
| ६९ पञ्चम मङ्गल कार | पञ्चमो मङ्गलः कस्य |
| रन्ध्रगत शानि । | कस्य रन्ध्रगतः शनिः |
| के दिल अनले हात | दीयतेऽग्नौ करः केन |
| के धरिल फणि । | केन वा ध्रियते फणी ॥ |
| ७० मागना दुधे पोला वाँचे न । | मार्गितदुग्धैर्जीवति नार्भः । |
| ७१ अब्राह्मणेर जाँकाल फोट | अब्राह्मणानां तु प्रायस्तिलकाडम्बरो महान् ॥ |
| ७२ बुधर पिण्डि उधर घाडे | बुधपिण्डयुधघाटायाम् । |
| ७३ चाँदेर गाये थुथु दिले | चन्द्रगात्रमनुनिष्ठीवनं यदात्मगात्रे ध्रुव- |
| आपन गाये पडे | मेव पतेत्तत् ॥ |
| ७४ धन्वन्तरिर माथाविया | धन्वन्तरेः शिरःपीडा । |
| ७५ साप स्याला जमीदार | सर्पाः स्याला भूपतय |
| ए तीन नहे अपनार । | एते नात्मीयकास्त्रयः ॥ |
| ७६ ढाकार नौका पाहाडे ओ चले | धनेन नौर्व्रजाति महीधराग्रतः |
| परेर अनुरोधे ढेकी ओ गिले | उदूखलं गिलति परानुरोधतः । |

राजर
पस्य

# श्रीमान् बालकविः।

( पूर्वतोऽनुवृत्तः )

विचारितमतीतायां संख्यायां यावच्छक्यं श्रीमतो बालकवेश्चारितमस्माभिः। अथेदानीममुना प्रणीते माहिषशतके गतानि कियन्तिचित्पद्यान्युपहृत्य प्रियपाठकमहाभागेभ्यो यावद्बुद्धिबलोदयं च समालोच्यैतानि प्रबन्धमिममुपसंहर्तुमिच्छामः। अवसरे किलास्मिन्केवलं कोल्हापुरीयराजगुरुप्रणीतव्याख्यासंवलितं मुद्रितमेकमेव पुस्तकं विद्योतते पुरस्तादस्माकमिति तदेवालम्ब्य प्रवर्तामहे प्रबन्धमेनं समालोचयितुम्।

यथार्थं किल प्रबन्धस्यास्याभिधानं माहिषं शतकमिति। शतेन हि पद्यानामुपवर्णितोऽत्र कविनाऽऽत्मनो महिषः। श्रूयते च महिषशतकमित्यपि प्रबन्धस्यास्य नामान्तरम्। तदपि नासङ्गतम्। षष्ठीसमाससिद्धं ह्येतदभिधानमिति। पूर्वत्र पुनः कर्मधारयाश्रयणमिति बोध्यम्। यद्यपि प्रबन्धेऽत्र कियन्तिचित्पद्यान्यधिकानि तथापि न तावता शतकत्वव्याघातः। शतपदस्य तत्सन्निहितसंख्यायां लक्षणाङ्गीकारात्। संदृश्यते चैवं हरिप्रभृतिभिः प्रणीतेषु वैराग्यादिशतकेषु। यश्च काव्यस्यास्य प्रणयने हेतुः सोऽयं प्रागेवोपवर्णितोऽस्माभिः। अत्र च प्राय एकविंशता पद्यैरुपोद्घातस्ततःप्रभृति च तत्तदात्मना महिषस्योपवर्णनमुपनिबद्धं कविना। प्रतिपादितं च क्रमशो महिषस्य महाराजत्वं बालकत्वं यजुर्वेदावधानित्वं माध्वत्वं श्रीवैष्णवत्वं सदाशिवमहायोगित्वं अश्वमेधदीक्षितत्वं परब्रह्मत्वं महेन्द्रत्वं मन्मथत्वं शालिग्रामत्वं समुद्रत्वं मारुतित्वं कार्तवीर्यत्वं सुकवित्वं प्रबन्धरत्नत्वं रसिकाग्रणीत्वं विटाग्रणीत्वं भरताचार्यत्वं मत्स्याद्यवतारदशकत्वं विरूपाक्षत्वं पर्वतत्वं पुराणभूपतित्वमर्जुनत्वं कर्णत्वं भारतकथात्वं द्रोणत्वं कपिशताकारत्वं वालित्वं राक्षसत्वं रावणत्वं चंदाखानत्वं वैयाकरणत्वं नैयायिकत्वं मीमांसकाग्रेसरत्वं छन्दःस्वरूपत्वं नवरसत्वं दिक्पालत्वं प्रतिग्रहीतृत्वं मुनित्वमारोग्यशालित्वं गृहस्थत्वं महिषासुरत्वं संरक्षकत्वं जगदाधारत्वं चेति। अन्ततश्चाशीभिरभिनन्दितो महिष एतेन।

इदं किल काव्येऽस्मिन्द्वितीयं पद्यम्—

**ये जाता विमलेऽत्र भोसलकुले सूर्येन्दुवंशोपमे**
**राजानश्चिरजीविनश्च सुखिनस्ते सन्तु संतानिनः।** —

**ये तद्वंशपरम्पराक्रमवशात्सभ्याः समभ्यागता-**
**स्त सन्तु प्रथमानमानविभवा राज्ञां कटाक्षोर्मिभिः ॥ इति ।**

अवश्यं किल पद्यमेतत्कण्ठेकरणीयं वृषलजातीयानां भोसलानां कुलस्य क्षत्रियतां ब्रम्भण्यमानैर्विशङ्कटपाण्डित्यवैभवैर्गजानिर्मालिकामात्रमवलम्ब्य चाविगणितधर्ममर्यादं सुदूरसमुज्झितब्राह्मण्यं च तत्पक्षमनुधावद्भिः कलङ्कितश्रीजगद्गुरुकीर्तिभिरर्वाचीनैः संकेश्वरजगद्गुरुभिः । पद्ये ह्यत्रात्मनः पोषकेषु भोसलवंशीयभूपेष्वाशिषं प्रयुञ्जानो बालकविर्वंशस्यास्य सूर्येन्दुवंशोपमत्वं प्राह नैव पुनः सूर्यवंशत्वमिन्दुवंशत्वं वेति । तत्र चोपमायाः प्रसरो यत्रोपमानोपमेययोः प्रस्फुटो भेद इति पद्यतोऽस्मान्निर्विशङ्कमेव सिध्यति भोसलवंशस्य क्षत्रियभिन्नत्वमिति द्रष्टव्यम् । यस्मै च वितीर्यत आशीरेतेन तदेतत्तञ्जोरमण्डलाधिपतेः श्रीमतो वेङ्कोजीमहाराजस्य नाम श्रीमत आद्यस्य च्छत्रपतेः शिववीरस्य वैमात्रेयभ्रातुः कुलमिति निपुणमवधार्यतां भोसलवंशस्य क्रीतदासैर्द्विजन्मप्रवरैः । तृतीयतश्च पद्यात्कविकालिकानां राजपुरुषाणां स्वरूपं सामान्यतो विशदीभवति । तदेतत्पद्यम् ।

**धान्यं वाऽथ धनानि वा समधिकं कृत्वा मिथः स्पर्धया**
**मिथ्यासाहसिनोऽभ्युपेत्य वृषला देशाधिकाराश्रयाः ।**
**उत्कोचेन नृपान्तिकस्थितजनान्वश्यान्विधाय प्रजा-**
**सर्वस्वं प्रसभं हरन्ति च शठास्ते यान्तु कालान्तिकम् ॥ इति ।**

एतेन चैतत्कवेरवस्थितिसमये देशाधिकारवतां पुरुषाणां प्रजापरित्रासकता भूपतेश्चासन्नचारिणामधिकृतानामुत्कोचप्रियता स्फुटीभवति ।

इदं च पद्यार्धं कवेरस्य विद्याबलादनुपलभ्यमानजीविकत्वादेव कृष्याश्रयणमित्यभिद्योतयति । यथा—

**विद्याजीवनकुण्ठनेन च कृषावङ्गीकृतायां चिरा-**
**दापक्के कणिशे कुतोऽपि पिशुनाः केदारमावृण्वते ॥ इति ।**

राजर
पस्य

स्तोऽपि च कवेरस्य राजपुरुषेभ्यः क्लेशावाप्तिरनुमीयते । यथा—

यो यं रक्षति तस्य स प्रभुरिति स्पष्टं हि मद्रक्षिणो
राजच्छ्रीमहिषान्विनुत्य सफलं कुर्वेऽद्य वाग्वैभवम् ।
मत्पीडानिरतान्मदीयमहिमाभिज्ञानशून्यान्प्रभून्
यन्निन्दामि निशम्य तद्गुणविदस्तुष्यन्तु सन्तो नृपाः ॥ इति ॥

अस्य च क्लेशप्रदा राजपुरुषाः सुभेदाराभिख्या इति प्रत्याययति पद्यमिदम्। यथा—

द्वारे भाग्यवतामनादृततया लब्ध्वाऽवमानं भृशं
मत्कृष्यर्जितसर्वलुण्ठिषु सुभेदारेषु चामर्षतः ।
निन्द्यन्ते महिषाधमस्तुतिकृतिव्याजेन यत्केवलं
तत्क्षाम्यन्तु परं निरङ्कुशतया संमानयन्तः खलान् ॥ इति ।

दीयतामत्र पद्ये दृष्टिः सहृदयधौरेयैः—

त्वं बद्धोऽसि हि मद्गुणैर्दृढमहं बद्धोऽस्मि च त्वद्गुणै-
स्त्वं मां रक्षसि कासराधिप सखे रक्षामि च त्वामहम् ।
इत्यन्योन्यकृतोपकारमुदितावावामिह द्वावपि
स्थास्यावः शरदां शतं द्रुतममी नश्यन्तु नः शत्रवः ॥ इति ।

आविष्करोति खल्वत्रात्मानमन्योन्यालङ्कारः* । अत्र हि बन्धनलक्षणा रक्षणात्मिका चैकैव क्रिया मिथो विधीयमानाऽभिधीयत इति ।

एतच्चावेक्ष्यतां भूपतिविषये मतमस्य कविप्रकाण्डस्य । यथा—

भूपो भूप इतीह किं न्वनुगता जालिः पटत्वादिव-
त्सामर्थ्येन निजेन योऽवति जगद्राजा स एव स्वयम् ॥ इति ।

पद्यमेतदेकत्रिंशम् । अतः परं चोपक्रान्तं तत्तदात्मना माहिषोपवर्णनं कविप्रवरेण । तत्रादितस्तावदस्य महाराजत्वमुपवर्ण्यते । यथा—

---

* अन्योन्यमुभयोरेकक्रियायाः करणं मिथः । इति दर्पणम् ।

सानन्दं महिषीशतं रमयसे मूर्धाभिषिक्तोऽन्वहं
त्वं वालव्यजनावधूतिमसकृत्प्राप्नोषि शृङ्गान्वितः ।
किं च स्वां प्रकृतिं न मुञ्चसि तृणप्रायं जगत्पश्यसि
स्वस्ति श्रीमहिषेन्द्र ते भुवि महाराजस्त्वमेवासि नः॥ इति ॥

महिष्यो महिषस्त्रियः पट्टाभिषिक्ता राज्यश्च । मूर्धाभिषिक्तः शिरःस्नातो राज्याभिषिक्तश्च । वालव्यजनं चामरं व्यजनसदृशं पुच्छं च । शृङ्गं किरीटं विषाणं च । प्रकृतिः प्रजाः स्वभावश्च । स्पष्टमन्यत् ।

निपात्यतां चात्र पद्ये दृष्टी रसिकैर्यत्र किलोपश्लोक्यते यजुर्वेदावधानित्वेन महिषः कविना । यथा—

ब्रूषे त्वं विविधान् स्वरान्बहुविधान्काण्डांश्च धत्से मुखे
प्राप्तश्चाध्ययनं पदक्रमविधिं किं चोच्चरन् गच्छसि ।
अङ्गेषु श्रममातनोषि च तथा वृत्तिं करोष्यद्भुतां
सत्यं श्रीमहिषेन्द्र सम्प्रति यजुर्वेदावधानी भवान्॥ इति ।

स्वरा उदात्तादयो ध्वनयश्च । काण्डास्तृणादिगुच्छा वेदभागविशेषाश्च । पदक्रमौ वेदविकृतिविशेषौ पदक्रमः पदन्यासश्च । उच्चरन् पठन् मूत्रोत्सर्गं कुर्वंश्च । अङ्गानि शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः । ज्योतिषामयनं चेति वेदाङ्गानि प्रचक्षत इत्युक्तलक्षणानि गात्राणि च । वृत्तिर्विवरणं वर्तनं च ।

एतत्पुनरेतेन कृतं महेन्द्रात्मना महिषोपवर्णनम्—

गोत्रोद्भेदनकौशलं प्रथयसेऽहल्यागलालिङ्गनं
प्रत्यूषे कुरुषे सकुक्कुटरवं बह्वप्सरःस्वाहृतः ।
स्वस्थाने मुदितस्वरूपगतया युक्तः श्रिया मद्गृहे
गोष्ठे तिष्ठ लुलायराज महतीं देवेन्द्रलक्ष्मीं वहन् ॥ इति ।

अत्र सभङ्गश्चाभङ्गश्चेत्युभयविधोऽपि श्लेषः समुल्लसति । गोत्रायाः पृथ्व्या उद्भेदने कौशलं पक्षे गोत्राणां पर्वतानामुद्भेदने । अहल्यायाः गौतम-मुनिपत्न्याः पक्षे हल्यायाः हलसंहतेः । बहुभिरप्सरोभिः सुष्ठु आदृतः पक्षे बह्व्य आपो येषु तथाविधेषु सरःसु आदृत आदरयुक्तः । स्वस्थाने । शर्परे खरि वा विसर्गलोपो वक्तव्य इति वार्तिकाद्विसर्गलोपः । तेन स्वर्गरूपे स्थाने पक्षे स्वस्यात्मनः स्थाने । गोष्ठ इत्यस्य विशेषणम् । स्पष्टमन्यत् ।

एष च समीक्ष्यतामपरः श्लोको यत्र किल प्रबन्धरत्नतयोपवर्णितो माहिषः कविना । यथा —

**वर्णैर्नैकविधैर्युतोऽसि च रसाधारोऽसि बन्धोज्ज्वलो**
**वृत्तात्मा ध्वनिगर्भितश्च बहुभिः पादैरुपेतोऽसि च ।**
**तत्सत्यं महिषेन्द्र सत्कविकृतश्लाघ्यप्रबन्धायसे**
**त्वामालोक्य पुनः पुनर्नवरसालङ्कारमीहामहे ॥**

वर्णा अकारादयः पीतश्वेतनीलादयश्च । रसानां शृङ्गारादीनां रसायाः पृथ्व्याश्च । बन्धाः गोमूत्रिकादयः पक्षे बन्धो बन्धनं च । वृत्तात्मा छन्दो-बद्धः पक्षे वृत्तः मांसलतया वृत्तभूत आत्मा शरीरं यस्य तथाविधः ।। ध्वनि-र्वाच्यातिशायि व्यङ्ग्यं ध्वानश्च । पादाः श्लोकतुरीयांशाः पक्षे चरणाश्च । रसालङ्कारम् रसानलङ्कारांश्च पक्षे पृथ्व्याः पूर्तिं पर्याप्तां भूमिमित्यर्थः ।

इदं पुनरवेक्ष्यतामपरं पद्यं यत्रोपश्लोक्यते भरताचार्यात्मना महिषः कविना यथा—

**प्रीतिं यासि मृदङ्गतः कलयसे तालप्रमाणं तनौ**
**चातुर्यं बहुलास्यकर्मसु नृणां संदर्शयन्व्यञ्जकम् ।**
**कुर्वन्स्वीयपरिश्रमाद्बहुविधादर्थैः सभारञ्जनं**
**सत्यं सैरिभमण्डलेन्द्र भरताचार्यत्वमालम्बसे ॥ इति ॥**

मृदङ्गतः मृदङ्गेन पक्षे मृदं प्रविष्टः । तालप्रमाणं तनौ कलयसे तालो गायकानां कालमानविशेषस्तस्य प्रमाणं तनौ करतलाघातेनेति शेषः कलयसे । पक्षे तनौ तालप्रमाणं तालप्रमाणामुन्नतिं कलयसे विभर्षीत्यर्थः । बहुलास्यकर्मसु बहुषु लास्यकर्मसु पक्षे बहुलेषु आस्यकर्मसु अशनाक्रियासु व्यञ्जकं भावादीनां महिषत्वस्य च द्योतकम् । स्वीयपरिश्रमात्कर्षणादिरूपात् गानादिरूपाच्च । सभारञ्जनं सभारं जनमिति च च्छेदः तथा च त्वत्सम्पादितैः शस्यैर्जनानां भारो भवतीत्यर्थः ।

इदं चान्यत्पद्यं यत्र किल भारतकथास्मारकत्वमुपवर्ण्यते महिषस्य । यथा—

**लोके त्वं स हि धर्मराडसि महाभीमोऽस्यपार्थोऽसि न**
**द्रोणीभूतमुखोऽसि कासरपते किं चासि नासत्यभूः ।**
**उद्घोषेण च कर्णशल्यमयसे भूरिश्रवोभीष्मतां**
**त्वत्सन्दर्शनतोऽद्य भारतकथा प्रत्यक्षमालक्ष्यते ॥**

धर्मराट् युधिष्ठिरः धर्मेण स्वस्वामिना यमेन राजते तथाविधश्च । भीमः पाण्डवविशेषो भयङ्करश्च । अपार्थो नासि पार्थोऽर्जुनोऽसीत्यर्थः पक्षे अपार्थो निरर्थकः नासि । द्रोणीभूतमुखः द्रोणीभूतं द्रोणस्वरूपतामाप्तं मुखं प्रधानपदं यस्य तथाविधः द्रोणप्रधानः पक्षे द्रोणी डोणगें इति ख्यातो जलयानविशेषः तस्य भूतं सदृशं मुखं यस्य दीर्घत्वादिति भावः । असत्यभूः नासि पक्षे नासत्यभूः नकुलः सहदेवश्च । कर्णशल्यभूरिश्रवोभीष्मा वीरविशेषाः पक्षे उद्घोषेण कर्णयोः शल्यं शल्यतामयसे भूरि च श्रवसो भीष्मतां भयानकत्वमयस इति योज्यम् । अन्यत्सुगमम् ।

( क्रमशः )

(त.कौ.) अन्योन्यमिथुनवृत्तयः अन्योन्यसहचराः । अविनाभाववर्तिन इति यावत् । चः समुच्चये । भवति चात्रागमः—

**अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः ।**
**रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥**
**तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।**
**उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥**
**नैषामादिः संप्रयोगो वियोगो वोपलभ्यते । इति (९)**

इति द्वादशकारिकायास्तत्त्वकौमुदी ।

---

(९) अन्यो–भ्यते । अविनाभाववर्तिनः अविनाभावोऽवियोगः अवियुक्तरूपः सम्बन्धः तस्मिन् वर्तन्ते तादृशाः नियतसहवर्तिनः नियतसहचरा इत्यर्थः । आगमः शास्त्रम् । अन्योन्येति । सर्वे गुणाः अन्योन्यमिथुनाः परस्परनियतसहचराः । सर्वे गुणाः सर्वत्र गच्छन्तीति सर्वत्रगामिनः सर्वत्रवर्तमानाः सर्वव्यापका इत्यर्थः । मिथुनं नियतसहचरं परिणामे सहकारीति यावत् । एषां गुणानां आदिः संप्रयोगः संयोगः वियोगः विरहः । वा अप्यर्थे । यद्वा आदिरिति संयोगवियोगविशेषणम् । न उपलभ्यते नित्यत्वादादिः नित्यप्राप्तत्वेन संयोगः वियोगश्च न प्रतीयते इत्यर्थः ॥ १२ ॥

इति द्वादशकारिकाव्याख्या तत्त्वसुधा ।



२

# त्रयोदशकारिका ।

प्रकाशप्रवृत्तिनियमार्था इत्युक्तं तत्र के त इत्थंभूताः कुतश्चेत्यत आह । ( १ )

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।**
**गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥ ( २ )**

सत्त्वमेव लघु प्रकाशकमिष्टं सांख्याचार्यैः । तत्र कार्योद्यमने हेतुर्लाघवं गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्ध्वज्वलनं भवति । तदेव लाघवं कस्यचित्तिर्यग्गमने हेतुः । यथा वायोः । एवं करणानां वृत्तिपटुत्वहेतुर्लाघवं गुरुत्वे हि मन्दानि स्युरिति सत्त्वस्य प्रकाशकत्वमुक्तम् । ( ३ )

---

( १ ) प्रका–आह । इत्थंभूता एतादृशाः । ते के किन्नामधेया इति लक्ष्यप्रश्नः । कुतः कस्मात् कथमिति लक्षणसङ्गतिप्रश्नः । सत्त्वादीनां प्रकाशकत्वादिकं यल्लक्षणं कृतं तस्य लक्ष्ये कथं सङ्गतिरिति प्रश्नार्थः ।

( २ ) सत्त्वं–वृत्तिः । सत्त्वमेव लघु लाघवान्वितं प्रकाशकं विषयोद्भासकं विषयज्ञानजनकं च इष्टं सांख्याचार्यैरभिमतम् । रज एव उपष्टम्भकं परचालकं स्वयं क्रियाशीलं च इष्टं तम एव गुरु गौरवान्वितं वरणकमन्यावरकं च इष्टं सांख्याचार्यैरिति शेषः । अर्थतः पुरुषार्थतः । वृत्तिर्गुणानां व्यापारः । प्रदीपवत् प्रदीपेन तुल्यम् । भवतीति शेषः। यथा अनलविरोधीन्यपि वर्तितैलादीनि मिलित्वा प्रदीपरूपतया गृहादिवस्तु प्रकाशलक्षणं कर्म सम्पादयन्ति न तु परस्परविनाशकारणानि भवन्ति तद्वत्परस्परविरुद्धाः सत्त्वादयो गुणा अपि संभूय पुरुषार्थत्वेन महदादि कार्यं जनयन्ति न तु परस्परविनाशहेतुतामापद्यन्त इति ।

( ३ ) सत्त्व–मुक्तम् । तत्र तेषु लाघवादिषु कार्योद्यमने सत्वरकार्यसम्पादने । गौरवस्य गुरुत्वस्य प्रतिद्वन्द्वि विरोधि । यतः यस्मात् लाघवात् । ऊर्ध्वज्वलनं शिखाया ऊर्ध्वगतिः । तदेव न त्वन्यविधमित्येवकारेण सूच्यते । कस्यचित् प्राणिनः तिर्यग्गमने वक्रगत्याम् । करणानामिन्द्रियाणां वृत्तौ विषयग्रहणे यत्पटुत्वं नैपुण्यं झटिति विषयसम्बन्धदक्षता । तत्र झटिति विषयसंयोगदक्षतायाम् । लाघवं लघुत्वरूपो धर्मः हेतुः कारणम् । मन्दानि मन्थराणि सत्वरं विषयग्रहणे असमर्थानि स्युः करणानि तथाविधानि भवेयुः । यतः करणानां वृत्तिपटुत्वे लाघवस्य कारणत्वं प्रकाशस्य वृत्तित एव ततः प्रकाशकत्वं सत्त्वस्य स्पष्टमेव । एवमन्यत्रापि ।

सत्त्वतमसी स्वयमक्रियतया स्वस्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसा उपष्टभ्येते अवसादात्प्रच्याव्य स्वकार्ये ते उत्साहं प्रयत्नं कार्येते तदिदमुक्तमुपष्टम्भकं रज इति । कस्मादित्यत उक्तं चलमिति । तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम् । ( ४ )

रजस्तु चलतया परितस्त्रैगुण्यं चालयत् गुरुणा वृण्वता च तमसा तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति ततस्ततो व्यावर्त्य तमसो नियामकत्वमुक्तं गुरुवरणकमेव तम इति । एवकारः प्रत्येकं भिन्नक्रमः सम्बध्यते । सत्त्वमेव रज एव तम एव । ( ५ )

ननु परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत्परस्परं ध्वंसन्त इत्येव युक्तं प्रागेव तेषामेकक्रियाकर्तृताया इत्यत आह । प्रदीपवच्चार्थतो वृत्तिः । दृष्टमेतद्यथा

---

( ४ ) सत्त्व–र्शितम् । सत्त्वतमसी सत्त्वतमोगुणौ स्वयं आत्मना अक्रियतया निर्व्यापारत्वेन कार्याक्षमत्वेनेत्यर्थः । स्वेषु स्वेषु कार्येषु या प्रवृत्तिस्तां प्रति अवसीदन्ती स्वस्वकार्यजनने अयोग्ये अक्षमे सती रजसा रजोगुणेन उपष्टभ्येते । अस्यैव विवृतिमाह । अवसादादिति अक्षमत्वात् । प्रच्याव्य विच्छिद्य स्वकार्ये निजकार्यजनने ते सत्त्वतमसी । उत्साहमित्यस्य विवरणं प्रयत्नमिति । चलं क्रियास्वभावकम् । एतेन प्रवर्तकत्वं रजस्त्वमिति लक्षणमायातम् ।

( ५ ) रज— तम एव । छलतस्तमोलक्षणमाह रजस्त्विति । त्रयो गुणास्त्रैगुण्यं स्वार्थे ष्यञ् । तथा च रजः परितः समन्ततः त्रैगुण्यं सत्त्वादि चालयत् स्वस्वकार्यकरणाय प्रवर्तयत् गुरुणा गुरुत्ववता वृण्वता आवृण्वता आच्छादयता । यत्र कार्यप्रवृत्तिस्तत्र प्रवृत्तिप्रतिबन्धकेन प्रवृत्तिनिवारकेण तमसा क्वचित् कुत्रचिदेव कार्ये न सर्वत्रेत्येवकारार्थः । प्रवर्त्यते कर्मजननसमर्थं क्रियते । ततस्ततः तस्मात्तस्मात्कार्यात् व्यावर्त्य रजसः प्रवृत्तिं निवार्य । स्थितमित्यूह्यम् । अन्यथा एककर्तृत्वाभावात् क्त्वा न स्यादिति । स्थितं तमः नियामकं निवारकमाच्छादकमिति यावत् । उक्तं कथितम् । ननु त्रैगुण्यं चालयदिति कथमुक्तं रजसोऽपि चालने कर्मकर्तृविरोधादिति । सत्यम् । रजोव्यक्तीनां भेदेन रजोव्यक्त्यन्तरं प्रति रजोव्यक्त्यन्तरस्य चालकत्वे न दोषः । इह वने तिलका इतिवत् व्यष्टिसमष्ट्योः कथञ्चिद्भेदविवक्षयेति एकः । कर्तृत्वकर्मत्वयोर्मिथो विरोधनियमोऽप्रामाणिक इत्यन्यः । भिन्नक्रम इति । भिन्नः क्रमः स्थापनस्थानं यस्य सः । वरणकमित्यत्रानन्तरं विन्यस्त एवकारः सत्त्वादिभिः प्रत्येकमन्वीयत इत्यर्थः ।

( ६ ) ननु–इति । शङ्कते नन्विति । परस्परमन्योऽन्यं विरोधो येषां ते । सुन्दश्चोपसुन्दश्च तयोस्तुल्यमित्यर्थे वतिः । पुरा सुन्दोपसुन्दनामानौ द्वावसुरौ भ्रातरौ तपो–

वर्तितैले अनलविरोधिनी अथ च मिलिते सहानलेन रूपप्रकाशलक्षणं कार्यं कुरुतः । यथा च वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्यकारिणः एवं सत्त्वरजस्तमांसि मिथो विरुद्धान्यपि अनुवर्त्स्यन्ति च स्वकार्यं करिष्यन्ति च । अर्थतः पुरुषार्थत इति यावत् । यथा वक्ष्यति पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् । इति । ( ६ )

अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्यानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति । तेषां च परस्परमभिभाव्याभिभावकभावान्नानात्वम् । तद्यथा । एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति । तत्कस्य हेतोः । स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात् । सैव

---

बलेनामरत्वमप्राप्यापि भ्रातृभिन्नादविनाशरूपं वरं ब्रह्मणो लेभाते । अथैकदा एकां मनोमोहिनीं भूतललामभूतां कामिनीं कामयमानौ तौ संग्रामे अन्योन्यं ताडितौ द्वावेव हताविति पौराणिकी वार्ता । तेषां गुणानामेकस्यां क्रियायां कर्तृतायाः । मिलित्वा कार्यकरणात्प्रागेव पूर्वमेव ध्वंसन्ते नश्यन्ति । ते गुणा इति शेषः । इत्येव युक्तं समुचितम् । समाधानमाह प्रदीपवदिति । वर्तिर्दशा तैलं च एते यथा व्यस्ते अनलस्य प्रकाशरूपाग्निकार्यस्य विरोधिनी विरुद्धे अननुकूले अथ च किन्तु अनलेन वह्निना सह मिलिते युक्ते रूपाणां प्रकाशलक्षणं कर्म कुरुतः विधत्तः । व्यस्ततां गतानां वस्तूनां क्वचिदसामर्थ्येऽपि समस्तानां तेषां तादृशकार्यकरत्वं घटत एवेति भावः । वर्तितैलयोरनलदाह्यत्वेन तद्विरोधित्वेऽपि सत्त्वादीनामविरुद्धत्वमित्याशङ्क्य दृष्टान्तान्तरमाह यथा वेति । वातश्च पित्तं च श्लेष्मा च ते । परस्परविरोधिनः अन्योन्यविरोधशीलाः । एषां विरोधिता वैद्यशास्त्रप्रसिद्धा । शरीरस्य स्थूलदेहस्य धारणं स्थापनं पोषणं वा । तल्लक्षणं तत्स्वरूपं यत्कार्यं कर्म तत्कर्तुं शीलमेषां ते । मिथः परस्परम् । विरुद्धानि विपरीतस्वभावकानि । अनुवर्त्स्यन्ति कार्योत्पत्तौ अपरस्य साहाय्यं करिष्यन्ति अपरसाहाय्येन स्वकीयं कार्यं विधास्यन्ति च । द्वयोरेव क्रिययोः प्राधान्यव्यवस्थापनाय चकारद्वयम् । अत्र हेतुमाह अर्थत इति । पुरुषार्थतः पुरुषस्य अनागतावस्थो भोगापवर्गलक्षणो योऽर्थस्तस्य करणाचेत्यर्थः ।

( ७ ) अत्र च– ख्याताः । ननु सिद्धावेव त्रैगुण्यस्य तदुत्पत्तिसंभवः । किन्तु त्रैगुण्यमेव न सिद्धिपथमारूढमिति त्रैगुण्यसिसाधयिषयाऽऽह अत्र चेति । सुखं च दुःखं च मोहश्च त एवात्मा स्वभावो येषां तान्येव न त्वन्यानीत्येवकारार्थः । निमित्तानि विचित्राणि कारणानि कलयन्ति सूचयन्ति अनुमापयन्ति । एकैकस्य निमित्तस्य नानात्वयुक्तिं दर्शयति तेषामिति । निमित्तानामित्यर्थः । सर्वस्य वस्तुनस्त्रैगुण्य-

## समस्यापूर्तयः ।

शरदियमिह यस्यां कान्तकाये निपीडा-
त्कमपि कमपि मोदं नूनमायाति चेतः ।
प्रिय इव रतिसारे श्रीयुते यत्र चन्द्रे
त्यजति न रतिलीलां यामिनी कामिनीव ॥

विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम् ।
पवनमेव सखीसुखरागवद्रतिमतः कलया तुलयामहे ॥

आचार्यकुलोत्पन्नस्य
नारायणसूनोर्मार्तण्डशर्मणः । ( बडोदा )

विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम् ।
अमलमभ्रधुनी जलमब्धिजापतिपदाब्जमधूलिरपोहतु ॥

विसृततिमिरकेशा स्रस्तचन्द्रांशुवस्त्रा
पिकरुतमणिताढ्या तारकस्वेदबिन्दुः ।
कुवलयपतिगाढाश्लिष्टदेहा कदापि
त्यजति न रतिलीलां यामिनी कामिनीव ॥

संस्कृतचन्द्रिकामित्रस्य
आर. विश्वनाथशास्त्रिणः ( कानाडुकात्तान् )

सरभसमतिवेलं गाढमालिङ्ग्य नाथं
रुचिरतिमिरवेणी चन्द्रबिम्बाननाभा ।
हिमकणयुतनीलेन्दीवराक्षी सभासा
त्यजति न रतिलीलां यामिनी कामिनीव ॥

विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम् ।
अलिकुलं शिवहृद्दलने मनोजनिकरार्पितमुत्पलमाबभौ ॥

एम्. वैद्यनाथशास्त्रिणः ( कानाडुकात्तान् )

कमलिनि प्रतिवारयसि क्रुधा बत मुधा मधुपं परशङ्कया ।
विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम् ॥

झटिति समपसार्य ध्वान्तनीलांशुकान्तं
रसयति कुमुदास्येनाब्जबिम्बं सुधार्द्रम् ।
वदति खगवचोभिर्मेति गच्छन्तमिन्दुं
त्यजति न रतिलीलां यामिनी कामिनीव ॥

भट्टश्रीरमानाथशास्त्रिणः ( मुंबई )

विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम्।
पिब सखे जलमल्पसरोभवं शरदि सज्जनचित्तवदुज्ज्वलम्॥

उडुगणशुचिभूषा ध्वान्तनीलाम्बराढ्या
धृतशशिमुकुरैषा मौनमालम्बमाना।
भुवनगृहनिविष्टा दिक्सखीभिः सहास्या
त्यजति न रतिलीलां यामिनी कामिनीव॥

पं. बालचन्द्रशास्त्रिणः
रामगढ़. ( सीकर )

विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम्।
अपि विमुच्य सरः परहंसकोऽञ्चति जगत्यधिपङ्किलमानतः॥

योधपुरस्थवैदिकपाठालयप्रधानाध्यापक-
कासल्योपाख्यपण्डितभागवतीलालशर्मणः॥

सुकलहिमकराङ्का सम्भवच्चौरशङ्का
सुखतरलिततारासिन्धुरक्षोभिचारा।
सति रजसि च हेया संस्खलत्सारमेया
त्यजति न रतिलीलां यामिनी कामिनीव॥

योधपुरस्थदाधीचकासल्योपाख्य-
पं. नित्यानन्दशास्त्रिणः।

उषसि दिवसनाथस्योद्गमं वीक्ष्य भानोः
कलयति परिगन्तुं लज्जया शर्वरीशे।
मधुरविहगवाग्भिर्मेति संव्याहरन्ती
त्यजति न रतिलीलां यामिनी कामिनीव॥

भज मराल सरोवरमत्र ते विहृतये विधिना विधिना कृतम्।
विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम्॥

( प्रष्टुः ) भट्टबलभद्रशर्मणः ( मथुरा )

कटु पयः स हि हंसवरः कथं पिबतु यः सुसरःसलिलं पपौ।
विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम्॥

श्रीचिन्तामणिशर्मणः। ( नरगुंद )

हृदय भूतपतिं भज निष्ठुर त्रिविधतापहरं करुणाकरम्।
विकचवारिजराजिसमुद्भवोच्छलितधूलिपरागविराजितम्॥

पं० श्रीनरोत्तमचन्द्रशास्त्रिणः।
( पेशावर )

# प्राप्तपत्राणि ।

( नात्र संपादकः स. संपादको वाऽनुरोद्धव्यः )

पेशावर.

३२--४--६२

वर्षिष्ठाः संस्कृतचन्द्रिकासंपादकाः प्रेष्ठाः ! स्वस्ति ।

आषाढीयसंस्कृतचन्द्रिकायां श्रीलरामप्रतापशास्त्रिणां प्रौढवादं सम्पश्यंस्तद्विषये किमपि समुट्टीकये ।

पण्डितरामप्रतापशास्त्रिन् मीमांसितं विचिकित्सितं भावत्कं परश्शतानीति । नाज्झलाविति सूत्रे परश्शतानीति वदन् भाष्यकारः सर्वसंमतः । तथापि परःशतानीति लिखद्भिः शेमुषीमद्भिः किमपराद्धम् । अपि दीयतां दृष्टिर्वा शरीति सूत्रे । वैभाषिकं ह्येतत् । भाष्ये तु द्वित्वे लोपे च त्रीणि रूपाणि सन्निवेशितानि ( परःशतानि—परश्शतानि—परश्श्शतानि ) अतः सविसर्गं लिलिखिषवो नापराध्यन्ते । यदवक् श्रीमान् दशभ्यः पराणीति तत्राप्यवधार्यताम् । परोदश परःसहस्रं परोलक्षं परःकोटिः परोऽर्बुदम् परःपरार्धा इति सम्पद्यते रूपमीदृगिति नरोत्तमोऽवद् । पारस्करादेराकृतिगणत्वात्समं निष्प्रत्यूहमवदातमिति ।

तार्तीयीके यदुक्तं पण्डावदग्रगण्येन गृह्य अपश्यतीति प्रयोगविषये तत्रापि पर्यालोचयतामस्माकं स्वान्ते विचारोऽयं समुदञ्चति । पाणिनिराचार्यः समासेऽनञ्पूर्वे क्त्वो ल्यप् स्यप्श्यनोर्नित्यमेवमादीनि सूत्राणि प्रणयन् दर्शयन्नालोकमन्येभ्यः कथं स्वयमन्धतमसे निमज्जेत् । न चैतच्छ्रद्धास्पदं प्रज्ञावताम् । प्रतीयते च पाणिनिराचार्यो व्याकरणाभिज्ञ इति । यतस्तु न सिध्यत्येतत्पाणिनीयेन तदेतत्सिद्धं व्याकरणान्तरेणेति प्रतीयते । यथा च कालिदासीये तं पातयां प्रथममास पपात पश्चात् । प्रभ्रंशयां यो नहुषं चकार । इत्यादिकमर्वाग्दृशां मते दूषितं प्राचां तु निर्दोषमिति । प्राञ्चश्च मुग्धबोधादिभिर्व्याकरणैः सिद्धान्तयन्ति । एवमिहापि विविच्यताम् । अलं विज्ञेषु ।

**नरोत्तमचन्द्रशास्त्री**
श्रीराधाकृष्णसंस्कृतहाइस्कूल
पेशावर.

२

रामदुर्ग ( सीकर )

प्रणत्यनन्तरं निवेदनमिदम् ।

आषाढचन्द्रिकायां समागता अनुयोगाः । तेषामुत्तरं यथामति तच्च दीयते न्यस्यतां चन्द्रिकायां चेच्चेतोरमं स्यात् ।

प्रथमतस्तु परश्शतानि इत्यत्र कथं सविसर्गकपाठः सोपपत्तिक इति । तदुत्तरं त्विदम् । यथा हरिः शेते हरिश्शेते इत्यादिलक्ष्येषु निर्बाधप्रवृत्ति वा शरीतिसूत्रेण रूपद्वयं विधीयते तथाऽत्रापि तत्त्वे किं दूषणं भवति इत्यत्रोट्टङ्कनां न जानीमः । यच्च लिखितं परःशतानीतिवत् दशभ्यः पराणि लक्षात्पराणि कोटेः पराणि अर्बुदात्पराणीति वक्तुरिच्छायां कीदृशि रूपाणि भवन्ति इति । तदुत्तरं त्वेवम् । स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २।१।३९ इति सूत्रस्य काशिकायां शतसहस्रौ परेणेति वक्तव्यम् इति वार्तिकं वर्तते तदनुसारेण तु परश्शतानि परस्सहस्राणीत्येव रूपद्वयं भवितुं योग्यं नान्यदिति प्रतिपादयामः । यच्च लिखितं सन्ध्यावधूं गृह्य करेण भानुरित्यत्र कथं ल्यबादेशः । तदुत्तरं त्विदम् । विगृह्येति कृत्वा पुनः पूर्वपदलोपः कृतः । दत्त इतिवत् । किं चैवंभूतानि रामायणे रूपाणि दृष्टानि । तेषां यथाऽऽश्रित्यार्षीयं मार्गं कार्यसिद्धिस्तथात्रापीति निःसन्देहम् । यथा अतो येय इत्यत्र तु सन्धिरार्ष इति मूल एव दीक्षितेनोक्तम् । एतेन अपश्यतीत्यत्र नुमभावः सिद्धः । न च अपशब्दप्रयोगा एते इति वाच्यम् । अपशब्दसमानाः प्रयोगा अपशब्दप्रयोगा इति मध्यमपदलोपेनेष्टसिद्धेः । पुनरत्र भणिते किमपि भणिष्यामः ।

**पं० बालचन्द्रशास्त्री**

सीकरराज्यगतरामदुर्गीयसंस्कृतपाठशालाध्यापकः ।

* *
*

परःशताद्यास्ते येषां परा संख्या शतादिकात् । इत्यभिधानचिन्तामणेः पद्यार्धस्य व्याख्यैव परःशतादिप्रयोगविषये प्रतिवचनमिति सैवात्रोद्ध्रियतेऽस्माभिः । यथा—शतमादिर्यस्य तच्छतादिकं तस्माच्छतादिकात् । येषां संख्येयानां गजादीनां शतात्परा ऊर्ध्वं संख्या ते परःशताः आदिना परःसहस्राः परोलक्षा इत्यादि । परःशतादिरिति सूत्रेण ( व्याकरणविशेषगतेन ) पञ्चमीतत्पुरुषसमासे साधवः । परशब्दस्य पूर्वनिपातः सकारागमश्च निपातनात् । परशब्देन समासार्थः परस्शब्दोऽप्यस्तीत्यन्ये इति ।

पातालविजयकाव्यस्य व्याकरणाचार्यपाणिनिप्रणीतत्वाभावेन तद्गताशुद्धिभिर्न किल तस्मिन्नापतति दोषः कश्चिदपि। अशुद्धा एव प्रयोगा एवंविधा इति तु मन्यामहे।

**सहकारिसम्पादकः ।**

---

३

॥ श्रीः ॥ ता० २१-६-६२

आस्माकीनप्रीतिभाजन ! परमविश्रम्भापण ! प्रेष्ठ !

सप्रह्वीभावं सस्नेहं विज्ञप्तिरेषा । भावत्कसविधे लेखोऽयं प्रेर्य्यते । आत्मसात्कृत्वाऽञ्जसा लेलिख्यतां सं. चन्द्रिकायाम् ।

## ( आवश्यकता । )

संस्कृतभाषोन्नतिचिकीर्षवः ! देशोपकाराङ्कुरितमनःकदम्बाः ! सहृदयवरिष्ठाः !

दृष्टचरमेवैतत्तत्रभवतां संस्कृतचन्द्रिकापीयूषामरीभूतमनस्कानां पण्डावदग्रगण्यानां प्रेयसामस्मिन्नार्य्यावर्ते यादृक्प्रचारो निलिम्पभारत्याः समुदभूत् । यादृक्षा विपश्चिद्वर्य्या अल्पे वयसि समधिगतसर्वशास्त्ररहस्या बलिष्ठाश्च न्यक्कृतारिव्राता ऐश्वर्य्येऽधरीकृतजम्भारिमहर्द्धयः । धनिकत्वे च धिक्कृतकुबेरमहानिधानाः सत्ये प्रख्यातयशश्श्रया महात्मान आसन् । नात्र कापि प्रौढिः प्रत्युतावितथमेवैतत् अद्यत्वे न वर्तते तथा । किङ्कारणम् । विषयेऽस्मिन् चिररात्राय ध्यायन्तो भृशमविद्यामेव मुख्यतमं कारणं समालपिष्यन्ति स्थाने खल्वेतत् । विद्याविहीनाः पशुभिः समानाः । प्रतिपादितश्चैतन्महर्षिवर्य्यैः । सोऽयं भारतो वर्षः प्रतिपदं विपद्यते चञ्चाति । सकलतिरस्कारतां प्रतीषिषतीति नात्र चित्रम् । सा च विद्या संस्कृतभाषैव यस्याः प्रभावः सहृदयानुभूतः । सा चेयं प्रतिदिनमधोगतिं प्रयान्ती समुद्वेजयति सचेतसां मनांसि । अस्या ह्रासादेवार्य्यावर्तोऽयं समनुभवति दुःखपरम्पराम् । उक्तञ्चापि ( छिद्रेष्वनर्था बहुलीभवन्ति ) विद्यायाः पुनरुत्थानादेव सुदिनाहानि देशस्य । तच्चोत्थानं नैकान्वयि। परं बहुजनसाहाय्यमपेक्षते। अस्याः पुनरुत्थानं कियन्मात्रं संस्कृतपत्राधीनमधिकं तु राजसाहाय्यमपेक्षते । राजानोऽपि वैदेशिकाः कथनमन्तरेण न कुर्वते कटाक्षपातमिति । एतादृश एव प्रस्तावे दृष्टिसरणिमधिरोहन्ति ते ते युधिष्ठिरादयो विक्रमान्ता महीभृतः । ये चात्मीयमेतदिति नीवीधनमिव संररक्षुः संस्कृतगजम् । आस्माकीनस्मरणकोटिमायाति पूर्वानुभूतः समयो राज्ञो दुष्यन्तस्य यस्मिंश्च रारक्ष्यमाना भुवस्तलं तन्मन्त्रिणः कुत्रापि पञ्चत्वं प्रयातस्य कस्यचिद्वणिजो निखिलं धनं संगृह्य भाण्डागारे संस्थाप्यमिति प्रत्यक्षीचक्रुः ।

२

राजापि तदवलोक्योवाच । कच्चित् तस्य काश्चित्परिग्रहोऽस्ति, बाढमिति सचिवाः प्रत्यवोचन् । कच्चित् सत्त्ववान् भविष्यतीति तस्यैतद्धनं नाममात्रतोपि न ग्राह्यं भूपतिरवक् । क्वासौ गतः कालः । एतर्हि लार्ड कर्ज्जनस्यापि समयः सुनिरीक्षित एव सश्रीकैः ।

( आस्तां तावत्सर्वम् )

साम्प्रतं विदितप्रायं भारतबालानां किमुत यूनां युवराजः ( प्रिन्स आफ् वेल्स ) समागमिष्यतीति दिष्टे चैतादृशे प्रार्थ्यन्ते सं. चं. ग्राहकवर्य्या निखिलसं.-पत्रिकासम्पादका ग्राहकाश्च संस्कृतोन्नत्येषिणोऽत्रभवन्तो यद्यस्ति युष्माकं संस्कृतभाषायां प्रेम चेद्वर्तते सत्यसमयाकाङ्क्षा नेत् समुज्जृम्भते जातिस्नेहः पुनरुज्जीवयत संस्कृतमातरं मृतप्रायाम् । पुनरुज्जीवनप्रकारश्चेत्थं प्रमादशय्यातो जागरित्वा संनह्य समवधायैकाचित्त्येन सर्वसंमत्या निर्बन्धो निर्मेयः समुपढौकनीयश्च तस्मिंश्च लेख्यं ( तत् प्रतिवासरं संस्कृतभाषा विलपन्ती किमुपेक्षतेऽतः प्रार्थ्यते । श्रीमद्भिरनोविषये ( Real way ) यद्वान्यविषये संस्कृतभाषाभिज्ञेभ्योऽपि स्थानं प्रदेयमिति यथा च स्यात् संस्कृतोन्नतिस्तथा प्रयत्नो विधेय इति ) नेत् कालमेनं मुधैव ग्लपयिष्यथ गोष्ठीसुखानुभवेनालस्यं विधास्यथ चेदहमिकया करिष्यथ स्वदेशानुरागं स्वजातिस्नेहं स्वधर्मप्रेम सदाचारतां कुलाभिमानं न हास्यथ नूनं प्राप्स्यथ मनोभिलषितमन्तरङ्गीकरिष्यथ विजयलक्ष्मीमलं पल्लवितेन ।

प्रार्थयते— विद्वद्वशंवदो
**नरोत्तमचन्द्रशास्त्री**
**अध्यापकः श्रीराधाकृष्णसंस्कृत-**
**हाईस्कूल पेशावर.**

---

## कश्चन सन्देहः ।

प्रदीयतामत्रोत्तरं कृपया सप्रमाणं संस्कृतचन्द्रिकापाठकेषु येन केनापि धर्ममर्मविदा महाभागेन ।

यदि जन्मान्तरसहस्रार्जितसुकृतपरिपाकवशात्कोऽपि गृहस्थः परिव्रजेत्तदा तत्पत्नी कथं वर्तेत कानि कानि चिह्नानि धारयेत् कथं च लोकैः समं व्यव-

हरेत् । किमनया पाचितमन्नं युक्तमशितुं विप्रेण उताहो नैव । पञ्चत्वं गतायाश्चास्याः केनाग्निना दाहः कथं चौर्ध्वदेहिकः संस्कारः । इति ।

प्रियसुहृदः संस्कृतचन्द्रिकायाः संपादकाः ! प्रकाश्यतामवश्यमागामिन्यामेव संख्यायामयं सन्देहो यानि चात्रोत्तरपत्राण्युपतिष्ठेयुस्तान्यप्यवश्यं प्रकाश्यन्तामिति शिवम् ।

श्रीदैवाद्वैतमतस्थापकः कोटीश्वरशास्त्रिशर्मा ।
गुडिवाड ( कृष्णा )

---

## सप्रमोदमङ्गीकारः ।

पण्डितप्रकाण्डैस्तञ्जोरनिवासिभिः टी. एस्. कुप्पुस्वामिशास्त्रिभिः सप्रणयमुपहारीकृतः क्षत्रचूडामणिः ढढौलीग्रामवास्तव्येन श्रीमता पण्डितरामदयालुमहाभागेनोपायनीकृतः प्रश्नशिरोमणिः उत्तरपाडाराजकीयविद्यालयसंस्कृताध्यापकैः श्री आनन्दचन्द्रतर्कवागीशैः प्रणयप्रसादीकृतो दुर्गोत्सवश्चेति पुस्तकत्रितयं सानन्दं सबहुमानं सधन्यवादं च स्वीक्रियतेऽस्माभिः । अवश्यं चात्र नातिचिरादेवात्मनोऽभिप्रायमाविष्करिष्यामः ।

प्राप्य च भालाविहारीसंज्ञे संवादपत्रे तयोः संपादकेषु कृतज्ञतामावहाम इति ।

---

## समालोचना ।

**निगमागमचन्द्रिका**— हिन्दीभाषामयी मासिकपत्रिका खल्वेषा । एषा च मुखपत्रिका श्रीमतो भारतधर्ममहामण्डलस्य । अत एव च शक्येतावबोद्धुं सहृदयैः किमस्यां प्रतिपाद्यमिति । सनातनभारतधर्मपुनरुज्जीवनमेवोद्देश्यं भारतधर्ममहामण्डलस्येति हि विदितमेवेदानीं प्रायेणाशेषाणामपि भारतवर्षीयाणाम् । अतश्च तन्मुखपत्रिकायां निगमागमचन्द्रिकायां तदुचिता अर्थात् केवलधार्मिका एव विषया निवेशयितुं युक्ता इति केन वैतन्न विज्ञायेत । यावत्यश्च धार्मिकविषयप्रकाशिकाः पत्रिकाः संदृश्यन्ते तासु नूनमियमेकैव प्राधान्यमनुविन्दतीति नोऽभिप्रायः । अद्ययावत्पुनरस्या नासीद्यथावसरं प्रकाशनम् । प्रत्यूहभूयिष्ठानि हि श्रेयांसि स्मर्यन्त इति । सम्प्रति पुनः सेयं यथावसरमेवाधिगतात्मलाभा सविशेषमेव प्रीणयत्यन्तरङ्गाणि पाठकमहाभागानाम् । न केव-

लमेतावत्किन्तु सेयं पूर्वतोऽपि भूयिष्ठमेव सौष्ठवमावहतीति नूनमेकान्तत एवैतत्प्रमोदस्थानम्। अत्र च ते ते धर्मविषया इव धर्मसंवादा अपि प्रकाश्यन्ते। येन कीदृशीदानीमवस्था तत्र तत्र प्रदेशेषु सनातनधर्मस्य के चास्योन्नतौ समास्थीयन्तेऽभ्युपायाः कैश्चामी आस्थीयन्त इत्यादिकं विनैव प्रयासं शक्यते विज्ञातुम्। मूल्यमस्या वार्षिकं रूप्यकद्वितयम्। किन्तु ये प्रदाय प्रतिवत्सरमेकं रूप्यकं स्वीकुर्युर्भारतधर्ममहामण्डलस्य सभ्यत्वं तेऽमी विना मूल्यमेवैनां प्रतिमासं विन्देरन्। एवं च कृते धर्मश्च प्रदत्तहस्तावलम्बो भवत्यात्मा च विनोदितो भवतीत्येकैव क्रियाऽर्थद्वयं सम्पादयति। तन्मन्यामहेऽवश्यमनुतिष्ठेयुरर्थमिमं श्रेयःकामुका भारतवर्षीया इति। अत्रविषये पत्रादिकं 'कार्यसम्पादकचान्द्रिकाकार्यालय, धर्मनिकेतन बनारस ( Benares )' इत्यत्र प्रेर्यम्।

---

## संवादसंग्रहः

### संपादकीयाभिप्रायश्च।

### News and Notes.

मासेऽस्मिन्महानवम्यां श्रीदुर्गादेवीविसर्जनावसरे कलिकातायां कालीघट्टे भगवत्याः काल्याः पुरस्तात्स्वदेशीयवस्तुमात्रस्वीकारप्रतिज्ञानार्थं गरीयान्समाजः समवेतः। समयेऽस्मिन्समुपस्थितानां पुरुषाणां संख्या पञ्चाशत्सहस्रतोऽप्यतिरिच्यत इति समुद्घोषयन्ति वङ्गीयसंवादपत्राणि। हृदयहारि खल्वेतददृष्टश्रुतपूर्वं दृश्यम्। आत्मीयजन्मभूप्रणयपक्षपातवशीकृतस्वान्तानां कस्य वा नापजहार मानसं तदानीन्तनो वङ्गीयबन्धूनामुत्साहः। नूनं वञ्चिताः खल्वस्मादृशो दूरदेशीया विधिना यैर्न विनिर्वर्तितं समयेऽस्मिन्कालीघट्ट उपस्थाय पारणं चिरसमुपोषितस्य नयनयुगलस्य। प्रियपाठकाः! सुकरं खलूच्चारयितुं पञ्चाशत्सहस्राणीति किन्तु निपुणं तावद्विचार्यतां चेतसि कच्चित्संदृष्टचरः श्रुतपूर्वो वा सोऽयमेकमेव प्रयोजनमुद्दिश्य समुपस्थित एतावान् जनसमाजः कुत्रापि। अस्ति नो द्रढीयसी प्रत्याशा यत्समाजोऽयमवश्यं प्रभविष्यत्यात्मनः समीहितं साधयितुमिति। कालीघट्टे श्रीमत्याः काल्याः पुरस्तादुपस्थितैः खल्वेतैर्वङ्गीयप्रियबन्धुभिः संस्पृश्य भगवत्याश्चरणौ न वयमपेतेष्वपि प्राणेषु स्वीकरिष्यामो

विदेशीयवस्तूनि यावच्छक्यमिति शपथो व्यधायीति श्रूयतेऽस्माभिः । नूनमभिनन्दामो वयमाचरितमेतद्वङ्गीयबन्धूनाम् ।

---

विदितमेवैतद्भारतवर्षीयाणामशेषाणां यत्प्रतिवत्सरमेव कवलीक्रियतेऽयं प्रदेशो दुर्भिक्षेण । दिने दिने च हीयते श्रीरेतस्य । उत्तरोत्तरं च कथं वा लप्स्यामहे जीविकां कथं च सुखं जीविष्याम इति चिन्तासन्तानसंदानितस्वान्ताः संलक्ष्यन्ते भारतवर्षीया इति । किन्तु सुदृढमेव निगृहीता अमी केनापि महामोहेन जानन्तोऽपि न जानन्ति जाग्रतोऽपि प्रस्वापमनुभवन्ति अनुन्मत्ता अप्युन्मत्तवच्चेष्टन्ते न चापि प्रभवन्त्यवबोद्धुं किं वात्मीयं किं च परकीयं कस्मिन्वावसरे कृतपदाः स्मः किं च नोऽनुष्ठेयमित्यादीत्यहो दुर्भाग्यं तपस्विनो भारतवर्षस्य । एतत्खल्विदानीं निपुणमवधार्यतां भारतवर्षीयैर्यत्प्रतिवत्सरं कवलीक्रियामहे वयं दुर्भिक्षेण यच्च दिने दिने परित्यक्ताः सम्पदा मलमल्लकमात्रावशिष्टवैभवाः संपद्यामहे तत्र किल भारतवर्षीयसम्पदः सर्वथा विदेशप्रस्थानमेव प्रधानो हेतुरिति । अतो यदि काम्यते सुखं नाम यदि च नाभिलष्यते पातः संवर्तसहोदरस्य वदनकुहरे दुर्भिक्षस्य यदि च परिजिहीर्ष्यते दारिद्र्यं किमधिकं यदि समभिलष्यत आत्मनो नास्तित्वाभावः तदाऽवश्यं समुन्मूलनीयं भारतवर्षीयसम्पदः परदेशप्रयाणमिदं परमोत्साहिभिर्भारतवर्षीयैः । संक्षेपतः क्रियायोगो निदानपरिवर्जनमिति हि समाचक्षत आयुर्वेदविदः । नितान्तमेव दुःप्रशमैश्च दुर्भिक्षादिभिर्व्याधिहतकैः संत्रास्यमाना यदि नेदानीमप्युपायमिमं समालम्बिष्यामहे तदा कुतः पुनरियं प्रत्याशा यत् कियताऽपि समयेन भारतवर्षं नामात्मनः स्वरूपेणावस्थास्यत इति । साम्प्रतमेव हि संशयितजीवितस्य मन्दमेव स्यन्दन्ते धमन्य एतस्य । अत एव च मन्यामहे न क्षमोऽयमस्यामयः कालहरणस्येति। गतजीवस्य पुनः किमौषधैः। अत एव च समनुमोदामहे प्राप्तकालमेतद्वङ्गीयबन्धूनामाचरितम् । तीक्ष्णतमगन्धग्रहाः पुनः केऽपि कुठारदण्डायमानाः समाचक्षते वङ्गीयबन्धूनामान्दोलनस्यास्य राजद्रोहगन्धवैशिष्ट्यम् । किन्तु नास्त्यत्रास्य स्तोकोऽपि संसर्ग इति नो बुद्धिः । भूयांसो हि स्वराज्यमात्रप्रणयपक्षपातिनो वैदेशिकाः पण्डितप्रवीरा अपि भारतवर्षनिवासिनां स्वदेशीयवस्तुमात्रग्रहणप्रतिज्ञया प्रमोदमानाः संदृश्यन्ते । एवंविधेष्वपि कर्मसु परावलम्बनं महीयसे दुःखाय भवतीति । किमधिकं परवशत्वमात्मवशत्वं चेति द्वितयमेवेदं क्रमशो दुःखस्य च सु-

खस्य च लक्षणमिति प्रोच्यते नीतिविदां धुर्यैः । सर्वं परवशं दुःखं सर्वमात्मवशं सुखमिति । अत एव च नांशतोऽपि गौरवमारोप्यते भारतवर्षीयकुलपांसनानां केषाञ्चिदसम्बद्धमिदं प्रलपितमस्माभिर्यदस्ति स्वदेशीयवस्तुस्वीकारान्दोलनस्य राजद्रोहेण साकं कोऽपि संबन्ध इति । इदमेव चान्येऽपि निपुणमतयः प्रतिपद्येरन् ।

---

सावेगमेव तत्र तत्र प्रदेशे प्रविशन्ती किलेयं स्वदेशीयवस्तुस्वीकारान्दोलनमहावात्या क्रमशः समाक्रान्तवती कोल्हापुरमिति नैतन्न विदितं संवादपत्राण्यनुवाचयताम् । अत्र पुनः पाठशालीयच्छात्राणां स्वदेशीयवस्तुमात्रस्वीकारपक्षपातितया उद्धृत्तसंकीर्णतां संपश्यता तत्र च संमाननीयस्य निसर्गसौजन्यशालिनो महात्मनोऽध्यापकप्रवरस्य प्रो. विष्णु गोविंद विजापूरकरमहाभागस्य स्वीयनियोगाननुष्ठानं प्रतिपश्यता श्रीमता कोल्हापुरमहाराजेन नाम भारतवर्षीयेण भारतवर्षसमुन्नतिमात्रप्रबद्धपरिकरस्य च्छत्रपतेः शिवाजिराजस्य वंशमलङ्कुर्वाणेन भूपतिना प्रच्यावितोऽध्यापकपदात्सोऽयं महाभाग इति नूनमेकान्ततश्चित्रीयामहे च दूयामहे च गर्हयामश्चात्मनो नगरस्य दुर्भागधेयानि । यथा च वयं पश्यामः तथा नास्ति किलाल्पांशतोऽपि कश्चिदपराधो नाम श्रीमतो विजापूरकरमहाभागस्य । हा धिग्दैवम् । अस्ति नो बलवती प्रत्याशा यदवश्यं पुनर्विचार्य नीतिप्रियः श्रीमान्कोल्हापुरमहाराजो विनिवेशयेदेव यथास्थानं कोल्हापुरनगरललायमानमेनं महाभागं समुज्ज्वलीकुर्याच्च सविशेषं दिगन्तरविसर्पिणीमात्मनः कीर्तिमिति । यत्पुनश्छात्राणामुद्धृत्तत्वं तत्किल प्रदत्तपरुषदण्डमिति न किल तत्र किञ्चिदप्यभिधीयतेऽस्माभिः । एतावत्पुनर्ब्रूमो यद्वेत्रलताघातमात्रस्य तथाविधापराधसमुचितदण्डत्वेऽपि यत्प्रतिबद्धोऽमीषां तथाविधदण्डप्रयोगपुरःसरं परीक्षाप्रवेशोऽपि वत्सरंयावत्तदेतन्नांशतोऽपि युक्तरूपमन्वष्ठायीति ।

---

पुण्यपत्तनेऽपि विजयदशम्यां सीमोल्लङ्घनयात्रायां विधाय महीयसीं होलिकां जुहवाञ्चक्रुरस्यां वैदेशिकवसनानि प्रधानप्रधाना नागरिका इति श्रूयते । नैतन्न युक्तम् । किन्तु प्रज्वाल्य गरीयांसं स्वदेशप्रणयपावकं यदि तत्र हूयते वैदेशिकवस्तुवाञ्छामयं हव्यं तदा नामैतोऽपि साधु स्यादिति मन्यामहे । बाह्येभ्यो हि कर्मभ्य आन्तराण्येव प्रशस्यन्ते भूयिष्ठफलप्रदातृतया चोपवर्ण्यन्ते विद्वद्भिरिति ।

एवं हि मूलत एव च्छिन्नो वैदेशिकवस्तुद्रुमो नांशतोऽपि पल्लवैः फलैर्वा युज्येत प्रत्युतानायासमेवोर्ध्वशोषं शुष्को नामशेषतामुपगमिष्यतीति ।

---

केचित्पुनरवेक्षमाणा भारतवर्षीयाणां स्वदेशीयमात्रवस्तुस्वीकारसंरम्भमेनमाक्रान्ता इव गरीयस्या चिन्तया प्राहुर्महीयसी किलासौकरी परदेशीयवस्तुपरित्याग इति । उपन्यस्यन्ति चात्र हेतुतया कियन्तिचिद्वचनानि यथा—( १ ) नाद्यापि भारतवर्षीयाणां स्वीयाः कार्यालयास्तावन्तः सम्पन्ना यावद्भिर्विनिर्मितानि तानि तानि वस्तूनि पर्याप्नुयुरशेषस्यापि भारतवर्षस्य । ( २ ) स्वदेशीयेभ्यो वस्तुभ्यो वैदेशिकान्येव स्वल्पेन मूल्येनाधिगम्यन्ते । ( ३ ) तान्येव च समधिकरमणीयानि समुन्नतजनपरिधानार्हाणि च भवन्तीत्यादीनि । प्रलापः पुनरयमुपर्युपर्यवेक्षमाणानामेतेषामतिमात्रमेव निःसारः । तथा हि । सत्यं न सन्ति भारतवर्षे तावन्तः स्वदेशीयवस्तुनिर्माणकार्यालया इति । बीजं पुनरत्र तदुत्पादितवस्तुग्राहकाणामभाव एवेति नैतन्नविदितं सचेतसः कस्यापि । यदि तु भूयांस एव ग्रहीतारः सम्पद्येरन् सम्पद्येतैव कार्यालयीयसंख्याया आधिक्यमपीति । अतः समवलम्ब्योत्साहं सुदूरं च समुत्सार्य तुन्दपरिमृजत्वं गेहेनर्दित्वं वा प्रतिज्ञायतां स्वदेशीयवस्तुस्वीकारस्ततश्चावेक्ष्यतां लभ्यन्ते न वा तानि तानि वस्तूनीति । कारणद्वितयं पुनरन्यत्प्रदर्श्यमानं ग्रहीतॄणां विलासमात्रशीलतामभिव्यञ्जयति । विलासशीलत्वं चैतन्नेदानीं समुचितं भारतवर्षीयाणाम् । तद्धि यदि स्यात्कथञ्चित्समुचितं तदा सम्पन्नदेशोद्भवानामेव स्यान्न पुनरश्वस्तनिकवृत्तीनां भारतवर्षीयाणाम् । एवंविधानि वस्तून्यपेक्ष्यन्ते तथाविधानि वस्तून्यपेक्ष्यन्त इत्यादिः खल्वयं कामो यथा यथा समधिकं विधीयेत तथा तथा दुर्निवारतामुपगतो महीयसे दुःखाय स्यात् । यथा यथा च संनिरुध्येत तथा तथाऽनायासमेव प्रादुर्भवेच्छान्तिमात्रसारं सुखपटलम् । उक्तं हि भगवता मनुना **न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥** इति । येभ्यः पुनर्नैतदभिरोचते मतमस्माकं न किल तेऽपि विफलप्रत्याशतामुपयान्तु । विद्यन्त एव हि तेषां मनोरथानुरूपाणि तानि तानि स्वदेशीयवस्तूनि । तेषां च विवरणादिकं को आपरेटिव्ह डेपो, काळबादेवी रोड, मुंबई ( Bombay ) इत्यत्रानकचतुष्टयमूल्यं शुल्कपत्रं प्रेष्यावगन्तव्यम् ।

---

अपरेषां पुनर्गरीयान्रोषारुणः कटाक्षः संस्कृतपण्डितेष्वस्मासु । ते खल्वाहूर्यन्न जानते स्वीयस्य देशस्य लाभं हानिं वा संस्कृतपण्डिताः किन्तु शास्त्राध्ययनैकताना यद्यन्नाम स्वल्पमूल्यं वस्तु स्यात्तत्तदविगणितस्वपरविचारमङ्गीकुर्वन्तीति । किन्तु नैतदनुमन्यामहे । यदि हि भारतवर्षेऽत्र केऽपि स्वधर्ममात्रनिष्ठाः स्युस्तर्हि तेषु संस्कृतपण्डिता एव प्रवरा इति नैततिरोहितं नाम । अतश्च नांशतोऽपि स्वीकुर्युरेते वैदेशिकानि वस्तुजातानि यद्यवबुध्येरन्वैदेशिकानां धर्मबाह्यत्वं यदि च जानीयुः पारमार्थिकीमवस्थितिं वैदेशिकवस्तूनाम् । अतः संस्कृतपण्डिता वैदेशिकवस्तुस्वीकारे नैकान्तत एव प्रबद्धपरिकरा इत्यपेक्षया न ज्ञापयन्त्येनान्पारमार्थिकीं वैदेशिकवस्त्ववस्थितिं नव्या इत्येव युक्तमभिधातुमिति ब्रूमः । को हि नाम समवगत्य सुश्वेतकान्तेरप्यस्थ्यङ्गारसंस्कृततया मलीमसतमाया वैदेशिकशर्करायाः स्वरूपं कामयेत तामेवास्वादयितुम् । कश्च वसासम्पृक्तां सिक्थवर्तिकां स्प्रष्टुमप्यभिलष्येत् । कश्च समीहेत तथाविधाभिरेव भूरिफेनवटिकाभिर्निर्मलीकरणं गात्राणामिति । दिङ्मात्रमेतदुदाहृतमस्माभिरन्यदप्येवमवबोध्यम् । यथा च वैदेशिकवाणिज्यस्य भारतीयधर्मप्रतिबन्धकता तथा प्रतिपादितमेव पूर्वं चन्द्रिकायां वैदेशिकवाणिज्यं भारतीयानां धर्मश्चेति शीर्षके प्रबन्धेऽस्माभिरिति नात्र पुनः पिष्टमेव पेष्टुमिच्छामः । संस्कृतपण्डिता अपीदानीं सुदूरमुज्झित्वाऽऽलस्यमवश्यमत्र कर्मणि प्रवर्तेरन् गोचरीकारयेयुश्चापरेषामात्मनः स्वदेशप्रणयातिशयमिति प्रार्थयामहे । अत्र च यद्विशेषतो वक्तव्यं तदन्यदा वक्ष्यामः ।

---

अवकाशाभावात्संख्यायामस्यामप्रकाशितानि संकेश्वरजगद्गुरुनिर्णये पण्डितानामभिप्रायपत्राण्यागामिन्यां संख्यायामवश्यं प्रकाश्येरन् ।

---



शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायाऽवलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

द्वादशखण्डस्य ] १८२७ शाककार्तिकमासस्य [ अष्टमसंख्या

श्रीगणेशाय नमः ।

## मासावतरणिका ।

कमलिनि किमु कार्तिकेऽतिमात्रं
कलयसि वैभवयोगतोऽवलेपम् ।
ननु सरभसमेत्य केवलं ते
मधुपगणा विलुठन्त्यमी मरन्दम् ॥

## सुभाषितानि । ( प्रा० )

साक्षिणोऽपि जगतां तव शम्भो दर्शनाय विचरन्प्रतितीर्थम् ।
अङ्गनात्मजगवेषणशीलं हन्त लोकमनुयामि विमूढः ॥ २२ ॥

स्तब्धो विनाशमुपयाति नतोऽतिवृद्धिं
मर्त्यो नदीतटगतो धरणीरुहो वा ।
गर्वस्य दोषमिति चेतसि संनिधाय
नाहंकरोति गुणदोषविचारदक्षः ॥ २३ ॥

मल्लीमाल्यधिया सुधाकरकलां कण्ठश्रियं कज्जल-
भ्रान्त्या भालविलोचनानलशिखां सिन्दूरपूराशया ।
कैलासे प्रतिबिम्बितात्स्ववपुषो गृह्णन्हसन्त्या मुहुः
पार्वत्याः प्रतिकर्मकर्मणि चिरं मुग्धो हरः पातु वः ॥ २४ ॥

जन्म तन्मन्महे धन्यं संसर्गो यत्र सत्तमैः ।
सौभाग्यं पश्य निम्बस्य चन्दनाचलजन्मनः ॥ २५ ॥

# वङ्गीयप्रवादानुवादाः ।

( पूर्वतोऽनुवृत्ताः )

| | |
|---|---|
| ७७ धान भान्ते शिवेर गान । | धान्यावघाते किमु शैवगीतम् । |
| ७८ साद्यमने कादा नाइ । | स्वच्छे चित्ते कर्दमो न प्रसक्तः । |
| ७९ पाप नाइ शरीरे येमेरे नाइ भय । | अपापे शरीरे यमान्नास्ति भीतिः । |
| ८० कांथा भेगे हागले यमे छोडे ना । | कन्थायां हृदति न तं यमो जहाति । |
| ८१ दशेर लाठी एकेर बोझा । | दशानां लगुडा ये स्युर्भार एकस्य ते ध्रुवम् । |
| ८२ बोझार उपरे शाकेर आढि । | भारस्यान्तः शाकमुष्टिर्न माति । |
| ८३ एक दम हाजार उमेद । | एकश्वासावकासे तु सहस्रं चेष्टितुं क्षमः । |
| ८४ कोप ना दितेइ<br>माथानिये काडाकाडि । | प्राक्शस्त्रपाताच्<br>शिरसे कराकरि । |
| ८५ यम जामाइ जमींदार<br>ए तीन न हे आपनार । | एते त्रयो न चात्मीया<br>जामाता ज्यापतिर्यमः । |
| ८६ शिकेछ कोथाय ?<br>ठेके छि यथाय । | शिक्षा क लब्धा<br>यत्रास परास्तः । |
| ८७ वडसी छेडे छिपे कामड । | बडिशं हित्वा दण्डं गिलति । |
| ८८ मथा नाइ तार माथा वेथा । | शिरो नास्ति शिरोव्यथा । |
| ८९ हलुर पोंदे मेखे रांधुनी कवलाय । | हरिद्रया लिप्तनितम्बवस्त्रा<br>विज्ञापयत्यस्मि सुरन्धनीति । |
| ९० हलुर खेले रांगा छेले हय ना । | हरिद्रायां खादितायां गौरः पुत्रो न जायते । |
| ९१ आपनि शुते ठाइ पायना शकराके<br>डाके । | नात्मनः शयितुं स्थानं<br>तत्र शङ्करमाह्वयेत् । |
| ९२ कामार वुड हले लोहाटनक हय । | वृद्धश्चेत्कर्मकारः स्या-<br>ल्लौहं तत्काठिनायते । |
| ९३ खोदार माइर दुनियार बाहिर । | ईशप्रहारो जगतो बहिश्चरः । |
| ९४ वाँशेर चेये कंचे दढ । | वंशतः शाखिका दृढा । |
| ९५ इंचडे पाका | जातो ह्यचिरनाशाय पक्वः पनरकोरकः । |

( क्रमशः )

# पाठकमहाशयेषु विज्ञप्तिः ।

महाशयाः ! सुविदितमेवेदं युष्माकं यदतिमात्रमवहीना अपि संस्कृतचन्द्रिकायाः संख्याः सत्वरं प्रकाश्य यथेयं प्रतिमासमेव प्रकटीस्यात्तथा प्रयतितमस्माभिः । उपाक्रामि च प्रतिमासं नियतसमयमेव प्रकाशनमस्याः । प्रत्यज्ञायि चाग्रेऽपि तथानुष्ठानम् । निवेदितं च श्रीमत्सु यच्चन्द्रिकायाः प्रकाशने विलम्बादिनिदानं शक्यं चेत्पूर्वमेव निवेदयिष्याम इति । किन्तु के वयमेकमनुष्ठातुम् । निष्फलो हि मानवानां सङ्कल्पः । स हि केवलं भवितव्यताया विलासेष्वेवायतते । अत एव च प्रतिज्ञेयमस्माकं न सफलीभूतेति नैतदाश्चर्यम् । अतीते ह्याश्विनेऽकाण्ड एव नानाविधैर्व्याधिभिर्विशेषतश्च दुःसहतमेन ज्वरेणाक्रान्ताश्चलाचलजीविताः समभूम । अविन्दाम चैकान्तत एव निःसारत्वम् । न च प्राभूम कियन्तिचिद्दिनानि रुग्णशय्यातः समुत्थातुमपि । न्यवेदि चायमस्माकं रुग्णभाववृत्तान्तो विज्ञानचिन्तामणिद्वारा चन्द्रिकायाः कार्याध्यक्षेण श्रीमद्भ्यः । अत एव च नापारि कार्तिके तन्मासिकीं सङ्ख्यां प्रकाशयितुमस्माभिः ।

कालातिक्रमं खल्वेनमसहमानैर्भूयोभिरेव पाठकमहाभागैः सविशेषमुपालब्धाः स्मः । उपालम्भः पुनरयमेतत्कृतो नांशतोऽपि व्यथयति हृदयमस्माकम् । प्रत्युत सविशेषमेवाह्लादयति । स हि निरतिशयमेषामौत्सुक्यमिव चन्द्रिकाया अपि सहृदयाह्लादकतामभिव्यञ्जयतीति ।

निवेदितपूर्वमेव चैतदस्माभिर्यच्चन्द्रिकायाः सप्तमी संख्या व्ही. पी. द्वारा प्रेर्येतेति । प्रेरिता चेयं तदनुसारेणैवम् । किन्तु न जानीमः कुतो वा कारणात्संख्याषट्कं निःशब्दमेव स्वीकृतवद्भिः कैश्चिदुदारमतिभिः परावर्त्य संख्यामिमां विप्रलब्धाः स्म इति । अथवा सोऽयमेतेषां दुरतिक्रमः स्वभाव एवैवं प्रभवति । किमन्यत् । अग्रत एव प्रदेयेऽपि चन्द्रिकामूल्ये माभूत्पाठकमहोदयानामविश्वास इति संख्याषट्कोत्तरमेव व्ही. पी. करणं निरचायि तथापि ननु परावर्त्यत एव चन्द्रिकेत्यहो सौजन्यमेतेषाम् । न जानीमः केन वा प्रार्थिता एते प्रार्थ्य चन्द्रिकां विनैव प्रयोजनं प्रकटयन्त्यात्मनः प्रतारकत्वमायासयन्ति चास्मानिति ।

केचित्पुनर्वत्सरेऽस्मिन्भिः प्रतिगृहीतं मूल्यमस्माभिरिति रोषविस्फारिताक्षं परिक्षिण्वन्ति संयुतदोषाक्षरैरस्मान् । किन्तु चन्द्रिकाया मूल्यं नाम न हि द्वादशमासानां कृते किन्तु द्वादशसंख्यानामेव कृते समादीयत इति न जानीमः कथं वा विस्मर्यतेऽमीभिरिति । एकस्मिन्नेव पुनर्वत्सरे चन्द्रिकायाः खण्डत्रयं प्राकाश्यतास्माभिरिति निपुणमुन्मीलिताक्षैः शक्यमेतदवबोद्धुममीभिरिति सबहुमानमेव प्रतिनिवेद्यतेऽस्माभिः । अत एव चास्थान एवायमेतेषां प्रकोप इति ब्रूमः ।

इदानीं किल भगवतो मृत्युञ्जयस्यानुग्रहेण सर्वथा निवृत्तामया यथापुरमलङ्कर्मीणतामनुप्राप्ताः स्म इति युगपदेव प्रकाश्य चान्द्रिकायाः संख्याद्वयमग्रेऽपि प्रतिमासं नियतावसरमेवैनां प्रकाशयिष्याम इति प्रतिजानीमहे । सफलीकरिष्यति च प्रतिज्ञामिमामास्माकीनां भक्तजनवशंवदो भूतभावनो भगवान् सर्वमङ्गलाजानिरित्येकान्तत एव विश्वास्मिमः ।

---

अवकाशाभावात्संख्याद्वयेऽस्मिन्न प्रकाशितं कविचरितं पौषचान्द्रिकायां प्रकाश्येत ॥

---

# विधवोद्वाहः ! ! !

विदितमेवैतद्विदुषां यत्पुरा निराकृतो विधवोद्वाहस्य शास्त्रीयत्वसन्देहः कैश्चित्समुद्भेद्यमानः काश्यादिनिवासिभिः पण्डितप्रवरैर्युक्तितः शास्त्रतश्चेति । प्रथमतो हि वैधव्यकातरया मात्रा प्रार्थितः श्रीमानीश्वरचन्द्रविद्यासागरः कालिकातासंस्कृतपाठशालातः समानीय पुस्तकभारं परिचाल्य चैनं साधयामास जीर्णशीर्णैः प्रमाणाभासैर्विधवानामुद्वाहस्य शास्त्रीयत्वं व्यामोहयाञ्चकार चान्तरङ्गाणि केषाञ्चिदनभिज्ञप्रायाणाम् । प्राकाशयच्च **निर्विषेणापि सर्पेण कर्तव्या महती फटा । यदि तत्र विषं नास्ति फटाटोपो भयङ्कर** इत्यभियुक्तोक्तिमनुसृत्य कियन्तिचित्पुस्तकानि । अथ काश्यां विद्वन्नयनसरणिमारूढानि तानि समखण्डयन्त प्रमाणोपन्यासपुरःसरं पण्डितप्रकाण्डैः कार्लेकरोपनामकैः श्रीमद्भी राजारामशास्त्रिमहाभागैः । खण्डनं चैतद्विधवोद्वाहशङ्कासमाधिनाम्ना प्रथितं परःशतैः पण्डितप्रवैररनुमोदितं च काशीविद्यासुधानिधौ प्राकाशि । अथात्र कश्चिद्दाक्षिणात्यः प्रत्यवतस्थे । विरचय्य च विधवोद्वाहविवेक

नाम प्रबन्धं विधवोद्वाहविवेकशङ्कासमाधेः खण्डनामिति प्रकाशयामास । तदेतद्दापतितमात्रमेव लोचनगोचरतां प्रत्यक्षरं खण्डितं श्रीमद्भिर्बालसरस्वती ( पं० बाळशास्त्री रानडे ) चरणैः । तत्संवलितश्च विधवोद्वाहशङ्कासमाधिः काश्यां १९२६ वैक्रमाब्दे पृथक्पुस्तकरूपेण संमुद्रितः समलङ्करोति भारतवर्षीयेषु तेषु तेषु प्रदेशेषु निवसतां विदुषां पुस्तकागाराणि । सुदूरं च निरस्यति सहस्रकर इव तमःपटलं युक्तिजाल विधवापरिणयाभिलाषुकाणामधार्मिकप्रवराणाम् । इतश्च पुण्यपत्तने श्रीमत्सङ्केश्वरपीठाधीश्वराणां श्रीमज्जगद्गुरुचरणानामादेशेन समाहूतायां महापरिषदि समुपस्थितेषु नानादिगन्तागतेषु पण्डितप्रकाण्डेषु संवृत्ते च विवादे पराजिता विधवोद्वाहपक्षाभिमानिनः पण्डितंमन्याः १७९२ शकाब्देषु स च वादस्तत्र संवृत्तश्च निर्णयः पुस्तकरूपेण द्विः प्रकाशितो महाराष्ट्रीयैः । अवसरे चास्मिन्प्रायेण निखिला अपि विधवोद्वाहमतानुयायिनः परित्यज्याभिनिवेशं श्रीमज्जगद्गुरुचरणानेव शरणं प्रपन्नाः समाचरितप्रायश्चित्ता उन्मोचयामासुरात्मानं दुरितात् ॥ पुनश्च १८०६ शकाब्देषु श्रीमद्भिर्माध्वाचार्यचरणैर्विधाय महीयसीं पण्डितसंसदं मद्रपुरे खण्डितः पक्षो विधवोद्वाहानुयायिनाम् । तत्र च तैस्तैर्विद्वद्भिः प्रदत्ता निर्णयपत्रिका एकत्र संनिवेश्यान्ध्राक्षरैः सम्मुद्रितं किमपि पुस्तकमद्यापि विद्योतते तेषु तेषु पुस्तकागारेषु । एवमशेषेऽपि भारतवर्षे खण्डिततमोऽप्ययं पक्षो निर्वीर्यमिवेदानीमुर्वीतलं मन्वानो विद्यासागरादिवत्कुशकाशमेव वावलम्बमानः प्रयतते समुत्थातुमिति ज्ञायतेऽस्माभिः । श्रूयते च सनातनं भारतधर्ममनुगच्छन्त एव केचिदर्वाग्दृश उपसंहारन्यायायनभिज्ञाः पक्षमेनं स्थिरीकर्तुं प्रयस्यन्तीति । सम्प्रति हि निखिलधरातलललायमाने

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**तदा तदाऽवतीर्याहं करिष्याम्यरिसंक्षयम् ॥**

इति प्रतिज्ञातवतो भगवतो गीताचार्यस्य देवाधिदेवस्य श्रीकृष्णस्य विहारभुवि वृन्दावने मथुरायां च प्रचलितोऽयं विवाद इति समाचक्षते ततः समुपनतानि पत्राणि । तत्र च यानि प्रदीयन्ते च प्रदत्तानि च विधवोद्वाहपक्षायोत्तराणि तत्रत्यैर्विद्वद्भिस्तानि प्रियपाठकमहोदयानां कृतेऽत्रोद्धर्तुमिच्छामः । संख्यान्तरे च प्रमाणोपन्यासपुरःसरमत्रात्मनो मतं वक्ष्यामः । सङ्क्षेपतस्तु व्यभिचारविशेष एव विधवोद्वाह इत्यभिप्रेयतेऽस्माभिरित्यवबोध्यम् ।

---

॥ श्रीहरिः ॥

# ॥ विधवाविवाहखण्डनम् ॥

इदानीं कतिपयैर्भारतवर्षीयैः पण्डितम्मन्यैर्विधवाविवाहसमर्थकं स्मृत्यादिवचनयुक्तं पत्रमेकं मुद्रापितम् तन्निराकरणमस्माभिः प्रकाश्यते प्रथमं पुनर्विवाहप्रापकत्वेनाभासमानानि पुनर्विवाहाभावसाधकानि प्रमाणानि निष्कृष्य लिख्यन्ते। संक्षेपेण च तेषां वास्तविकोऽर्थोऽपि प्रदर्श्यते तत्र प्रापकत्वेनाभासमाना श्रुतिः परैरुद्भाविता सा यथा " उदीर्ष्वनार्यभिजीवलोकमिता सुमेतमुपशेष एहि । हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभिसम्बभूथ " इति । परन्त्वस्य पुनर्विवाहसाधकत्वं कथमपि वक्तुं न शक्यते । यतस्तन्मंत्रस्य हे नारि त्वमेतं गतप्राणं देहं पतित्वेनाभिमन्यमाना सती एतत्समीपे शेषे उत्तिष्ठ नायं देहस्तव पतिः किन्तु एतदधिष्ठाता जीवः अतः स यत्र वर्तते तं जीवलोकं मर्त्यलोकादन्यमभिलक्ष्य गच्छ तत्र च गत्वा इहलोके पाणिं गृहीतवानपि पुनरमुष्मिन्नपि लोके त्वामेव यो भार्यामिच्छति तस्य दिधिषोः पत्युरेतदेव जायात्वं यदिदानीं त्वयि वर्तते तदेव प्राप्नुहि । इत्यर्थ एव अत्रत्यैतत्पदस्वरसात् सायणाचार्य्यैश्च तस्य जनित्वमित्येतत् समानाधिकरणेन योजनादेतत्सदृग्वेदमंत्रभाष्यार्थानुगुण्यात्संदर्भशुद्धेश्च निर्णीयते । केचित्त्वत्र दिधिषुपदस्य रूढ्यर्थावच्छेदकावच्छिन्नपरत्वं मन्यमानाः पुनर्भूभवनस्यान्ववसर्गं पुत्रदेवरादिकर्तृकं वेदो बोधयतीत्याचक्षते । तदनुसारेणापि नास्ति पुनर्विवाहप्रापकत्वाशङ्कापि । एवमन्येषामपि मंत्राणां वास्तवार्थेन विधवाविवाहबोधकत्वं न सिध्यति परन्त्वत्र विस्तरभिया न ते विन्यस्यन्ते " स तु यदन्यजातीयः पतितः क्लीब एव च । विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा । ऊढापि देया साऽन्यस्मै सप्रावरणभूषणा " इति कात्यायनवचनं तु स्वगोत्रो वेति स्वारस्यात् वाग्दत्तापरमेव । अत्र ऊढापीत्यपि शब्दः कैमुतिकन्यायेन वाग्दत्ताया एव अन्यस्मै दानमाचष्टे न तूढायाः ( कृतसप्तपदीकायाः ) तथात्वे सगोत्रोढाया अपि पुनर्विवाहः प्रसज्येत तथा च सति मातृवत्परिपालयेदिति विरुद्ध्येत इति विद्वन्मनोहरायां विस्पष्टम् । अत एव जातसप्तपद्यन्तसंस्कारायाः पत्यन्तरकरणे तेनैव मुनिना ।

क्लीबं विहाय पतितं या पुनर्लभते पतिम् । तस्यां पौनर्भवो जातो

व्यक्तमुत्पादकस्य सः । --इति वचनेन बोधितं पुनर्भूत्वं संगच्छते ॥

कुलशीलविहीनस्य षण्ढादिपतितस्य च । अपस्मारिविधर्मस्थरोगिणां वेषधारिणाम् ॥ दत्तामपि हरेत्कन्यां स्वगोत्रोढां तथैव च ।

इति वसिष्ठवचनमपि दत्तापदस्वरसात् वाग्दत्तापरमेव अत एव तस्यैव महर्षेः या वा क्लीबं पतितमुन्मत्तं वा पतिमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति । इति पुनरुदूढायाः पुनर्भूत्वबोधकवचनं संगच्छते ॥

वरश्चेत्कुलशीलाभ्यां न युज्येत कदाचन । न मन्त्राः कारणं तत्र न च कन्यानृतं भवेत् ॥ समाच्छिद्य तु तां कन्यां बलादक्षतयोनिकाम् । पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत्—इति शातातपवचनं तु कन्यापदवरपदस्वारस्यात् वाग्दत्तापरमिति स्पष्टमेव । परन्त्वत्र मन्त्रपदेन पाणिग्रहणप्राक्कालिका मन्त्रा विवक्षिता इति ज्ञेयम् ॥

सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा । पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति। (इति मनुवचनं) यदि सा बालविधवा बलात्त्यक्ताऽथ वा क्वचित् । तदा भूयस्तु संस्कार्या गृहीता येनकेनचित् ॥ ( इति ब्रह्मपुराणं च ) पुनर्भूबोधके एव संदर्भशुद्धेः ॥

कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता । पुनः पत्युर्गृहमियात् सा द्वितीया प्रकीर्तिता ॥ पुनर्भूप्रतिपादकनारदवचनाच्च ॥

पाणिग्राहे मृते बाला केवलं मंत्रसंस्कृता । सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति ॥ इति वसिष्ठवचनमपि गतप्रत्यागतपुनर्भूविषयकमेव ॥ आद्भिर्वाचा चेत्यस्य वैयर्थ्यापत्तेः ॥ तत्र वरयित्वा तु यः कश्चित् प्रणश्येत्पुरुषो यदा ।

ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् । इति वचनं वाग्दत्तापरम् ॥

स्त्रीपुंसयोस्तु संबन्धाद्वरणं प्राग् विधीयते ॥ वरणाद् ग्रहणं पाणेः संस्कारोऽपि विचक्षणैः ॥ तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् । उद्वाहितापि सा कन्या न चेत्संप्राप्तमैथुना । पुनः संस्कारमर्हेत यथा कन्या तथैव सा । इत्यत्रापि ऊढापि देया सा कन्या– इति पूर्ववदेव समाधेयम् । इदमिदानीमवशिष्यते पुनर्विवाहसमुत्सुकानां मूर्धाभिषिक्तप्रमाणेनानुमतम् । ( नारदपराशरवचनम् । )

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ॥ पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥

इति । अस्य वाग्दत्तापरत्वं नन्दपण्डितैः सिद्धान्त्यते । तथा हि । नन्वस्तु परिवेदने कन्यायाः ज्येष्ठसमर्पणानन्तरं पुनस्तेनैव विवाहः परन्तु वाग्दानानन्तरमनिष्पन्ने विवाहे वरवैगुण्ये ज्ञाते कथमित्यत आह नष्टे मृत इति ॥ वाग्दानानन्तरं पाणिग्रहणात् प्राक्पतावुत्पत्स्यमानपातित्वे पूर्वस्मिन् वरे नष्टे दूरदेशगमनेनापरिज्ञातवृत्तान्ते नारीणां कन्यानामन्यः पतिर्विधीयते इत्याद्यर्थस्वीकारात् ॥ केचित्तु नन्दपण्डितसिद्धान्तमेवावलम्बन्ते । परे तूढायाः पुनरुद्वाहमिति कलिवर्ज्यस्य पुनर्भूत्वप्रयोजकं पुनः संस्कारप्रतिषेधकत्वं स्वीकृत्य तत्प्रतिप्रसवोऽयानिति मन्यमानाः पुनर्भ्वा एव कलावापत्पश्चके अभ्यनुज्ञापकत्वमिति व्यवस्थापयन्ति परं तस्याः कलौ सिद्धावप्यपाङ्क्तत्वमस्त्येव तज्जानामपाङ्क्तत्वबोधकमनुवचनात् तदिदम् ॥

( मनु० अ० ३ ) प्रेष्यो ग्रामस्य याज्यस्त्वित्यादिना प्रक्रम्य । पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥ इत्युक्त्वा प्रेतनिर्यातकश्चैव वर्जनीयः प्रयत्नतः । एतान्विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान् । द्विजातिप्रवरो विद्वानुभयत्र ( दैवे पैत्रे च कर्मणि ) विवर्जयेत् ॥ इत्थं बहुभिः प्रकारैः श्रुतिस्मृतिशिष्टाचारादिविरुद्धं संभवत्यापाततः प्रतीयमानं तदर्थमवलम्ब्य महतोऽनर्थस्य प्रवर्तनं साहसस्य पराकाष्ठैव श्रुत्यादिभिः पुनर्विवाहाभावस्य स्पष्टसिद्धत्वात् ।

इत्यलमधिकाङ्क्षनेन प्रज्ञावताम् ।

---

॥ श्रीः ॥

# विधवोद्वाहखण्डनम् ।

## ( प्रथमोच्छ्वासः )

**त्रिभुवनकमनन्तमालवर्णं रविकरगौरवराम्बरन्दधाने ।**
**वपुरलककुलाऽऽवृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥ १ ॥**
**यो वादिदुर्मतमतङ्गजपुङ्गवानां गण्डस्थलीमदनिवारणवारणारिः ।**
**दिग्दन्तिराजरददण्डलसद्यशस्कस्तं वामनार्यचरणं शरणम्प्रपद्ये ॥२॥**

प्रियसुहृत्प्रवराः ! नूनं विचार्यमाणा " विधवोद्वाह " विषयेऽवश्यम्प्रतिपद्येरंस्तत्रभवन्तो यदयममूदृशो विषय इति । नैतच्चित्रं, यदिमे स्वप्नेऽप्यनालोकितशास्त्राः प्राकृतपुस्तकावलोकनप्रतिष्ठासवोऽर्वाचीनपद्धतिसुशिक्षितमहाशयाः

सुरापानमेव सुधामाधुर्यमाकलयन्तः सोपस्नानमेव सुरसरिदवगाहनमिव प्रशंसन्तश्चक्रद्वयपच्छकटीमेव मातङ्गपुङ्गवम्मन्यमानाः समाचारपत्रावलोकनमेव वेदपारायणं विजानन्तः पुराणशास्त्रादिनिन्दामेव इन्द्रासनारूढोपदेशकतां विदन्तः वदनन वीटिकाधूमस्तोमानुद्गिरन्तस्तानेव दिग्दन्तिदन्तदण्डविसारियशोराशिनिदानमाकलयन्तो यत्सनातनधर्ममर्मण्यनभिज्ञाः प्रत्यहमेतद्विषयम्प्रति प्रत्यवतिष्ठन्त इति । किन्तु सद्धर्मप्रवर्तकाऽऽचार्याः समालोकितसच्छास्त्रा अपि विदितवेदाभिप्राया अपि सुज्ञातपुराणमर्माणोऽपि सनातनधर्माध्वानमभिघ्नन्तीत्याश्चर्यम् । इति विधवोद्वाहविषयम्पुरस्कृत्यैव लेखं लिलिखिषामीति क्षम्यतामेष साहसप्रकारः ।

सुविदितमेवैतत्सुधियां यदयं कालः सकलकलाकलापकुशलशिल्पी, जगति नवनवान्प्रकारानुद्भावयतीति । यो हि पुरा श्रोत्रपथमपि नावतीर्णः स एव सम्प्रति प्रत्यक्षतामुपयाति पाखण्डविषयः । अदृष्टपूर्वोऽपि अधर्मस्य धर्मवर्णनप्रकारस्समापतति समक्षताम् । युक्तं किलोक्तं महाकविना श्रीभवभूतिना ।

**पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां**
**विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।**
**बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं**
**निवेशः शैलानान्तदिदमिति बुद्धिन्द्रढयति ॥**

साम्प्रततनो हि समयो न केवलं पदार्थव्यत्यासमेव दर्शयति अपि तु प्रत्यहं ह्रासपदतामेव परिचाययति तथाविधानां भावानाम् । यो हि पुरा महान्धर्मशैलस्सोऽद्य शिलाभावं भजते । यश्च सकलविटपानिकरैः सुशोभितः कोकिलकेकिकीरनिवहमधुमधुरगुञ्जितश्च मञ्जुधर्मनिकुञ्जः सोऽद्य वनतां श्रयति । समयमेनमनुसृत्य साधु भणितं प्रियसुहृदा श्रीनिवासशास्त्रिणा—

**'महाशैलः पूर्वं समजनि शिला सम्प्रति लघुः**
**सरः सिन्धुस्पर्धि प्रथममभवत्पल्वलमिव ।**
**पुरी दिव्या पूर्वं शिव शिव जगामाद्य वनताम्**
**कियन्तं व्यत्यासं विरचयति कालोऽनतिचिरात् ।**

१ भागवतेऽदः । २ साबुन । ३ बाईसिकल । ४ सन्ति केचन वृन्दावनमथुरप्रभृतिषु ।

२

साधु व्याहृतं दैवाऽभिलषितमुपवर्णयता श्रीक्षेमेन्द्रेण ।

**अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां**
**मेरुर्मृत्कणतां तृणं कुलिशतां वज्रन्तृणप्रायताम् ।**
**वह्निः शीतलतां हिमन्दहनतामायाति यस्येच्छया**
**लीलादुर्ललिताऽद्भुतव्यसनिने दैवाय तस्मै नमः ।**

किन्तु नैतदविदितपथमनुसरति विदुषां यदिन्दिरामन्दिरः श्रीकृष्णप्रभुर्यद्रक्षणाय साक्षादेवमनुशास्ति यथा

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥**

तत्र को वा जडोऽहस्करमण्डले धूलिमुष्टिप्रक्षेपमिव सनातनधर्मस्य विकृतिं स्पृहयेत् । यद्यपि परिश्रम्यतां व्याख्यानैर्भूयतां सभाभिर्निर्मीयन्ताम्पुस्तकानि शलभायन्तामधर्मदहने ताड्यन्तां " विधवाविवाह " डिण्डिभाः किन्तु " अरक्षितं तिष्ठति दैवरक्षित " मिति विपरीतपथमेवाऽवगाहतेऽमीषामुद्योगः । नैतदपरिचितन्नाम कोविदानां यदमीभिर्गेहे शूरैः सिद्धान्तितमस्त्येकलज्जाम्परित्यज्य जगतो विजयी भवेदिति । " मुखमस्तीति वक्तव्यन्दशहस्ता हरीतकी " इति च । न्यायानिमाननुसृत्य लिखितैः केवलप्राकृतभाषामयैः कुपुस्तकैरज्ञान्विमोहयन्ति । पुनरुच्यताम्महाभागैर्यदेभ्यः कः कोविदसम्राडपि विचिकीर्षेत् । तथाप्येषां साहसप्रकारः प्रदर्शनीयः । अमीभिर्यानि प्रमाणान्युपन्यस्यन्ते विधवोद्वाहविषये तेष्विदं सर्वातिशायि पराशरवचनम् ।

**नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।**
**पञ्चस्वापत्सु नारीणाम्पतिरन्यो विधीयते ॥** अ. २ व. ३१

श्रेष्ठाः ! " अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठमिच्छति " इत्यहो मतिमत्त्वमेतेषाम् । एषां प्रमाणान्येव " विनायकम्प्रकुर्वाणो रचयामास वानर " मिति रीतिमाश्रयन्ते । निपुणं निरीक्ष्यतामेषां मुग्धजनविमोहनचातुरी । व्याकृतिपद्धतिङ्ग्रामधीतीनामपि नास्त्यविदितं यत्पराशरस्मृतौ— " पतौ "

इत्यनुपपन्नमिति । पतिशब्दस्य समास एव " घि " संज्ञाविधानात् । अन्यच्च " विधीयते " इत्यनेन नानुशास्ति भगवान्पराशरो यद्विदधीत इति ।

अत्रायमर्थः । नष्टे " अदर्शनतां गते " मृते ' संन्यस्ते ' ' षण्ढे ' ' सुरापानादिना पतिते ' पतिरित्याख्याते पतौ ( पत्यौ ) सप्तपदीमन्तरा पत्यौ पतित्वाभाव इति भावः । एवं सति पञ्चस्वापत्सु स्त्रीणां ' पति ' रन्यो विधीयत इति । नात्रैवं व्याख्याने किम्प्रमाणमिति शङ्क्यम् । ' पतौ ' इत्यत्र विप्रतिपत्तेस्तत्रैव च ।

**मृते भर्तरि या नारी ब्रह्मचर्ये व्यवस्थिता ।**
**सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥**
**इत्यनन्तरवचनेन ब्रह्मचर्यानुशासनात् ।**

अथवा " पतौ " इत्यत्र न पतिरपतिः " नञर्थ आरोपः " इति मञ्जूषायामुक्तेर्नञ्समासप्रश्लेषाद् "घि" संज्ञाऽवधेया । अर्थात्सप्तपदीतः पूर्वं नष्टे मृते सति तत्पतिरन्यो विधीयत इति । अन्यथा ।

**न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः ।**
**दत्त्वा पुनः प्रयच्छन्हि प्राप्नोति पुरुषाऽनृतम् ॥**

इत्युक्तेः " नानृतात्पातकं परमिति " महापापभाग्भवेत् । अथाऽपरमवालोक्यताम्प्रमाणं वचनद्वयरूपन्तेषाम् ।

**या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया ॥**
**उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥** म. अ. ९ व. १७५
**सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा ।**
**पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥** म. अ. ९ व. १७६
**इति ।**

अत्राऽयं निष्कर्षः । या पत्या त्यक्ता मृतभर्तृका च या नारी सा चेदक्षतयोनिरथवा पतिसन्निधिं गतागता वा भवेत्तथापि पौनर्भवेन भर्त्रा सह पुनः संस्कारमर्हतीति । किन्त्वेतदसाध्वीविषयकमेवाऽन्यथा परित्यक्ता कथं स्यात्

१ पुनर्भ्वाः अपत्यं पौनर्भवः तेन गोलकजातीयेन संकरेण, बीजितः अदायादेन ॥

वचने च " स्वयेच्छया " इति पदेनाऽयं संस्कारोऽशास्त्रीय इत्यपि द्योतितम् । अत एवोक्तं भगवता मनुना

**न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यत इति ॥**

अन्यथा नैवं वदेत् । एवं श्रुतिरपि । " नैका द्वौ पती विन्देत " इत्याह । पराशरोऽपि

**स्त्रीणां विवाह एको वै वेदोक्तः पावनो विधिः ।**
**स्त्रीपुंसयोश्च विन्यासस्तयोरन्योऽन्यमुच्यते ॥**

इत्येवमुपादिशति । यदि पराशरस्मृतिवचनेन " नष्टे मृते " इत्यादिना " विधवोद्वाहो " विहित इत्युच्यते कैश्चित्तर्हि कोविदप्रवराः ! वदतो व्याघातः किम्पराशरस्य ?

पतिव्रताधर्मोऽनुशासनमपि धर्मशास्त्रकृतां विधवोद्वाहनिषेधविषयकमिति नास्ति संख्यावतां हृदये स्तोकोऽपि सन्देहः । यथा हि शुद्धितत्त्वे ।

**आर्तार्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।**
**मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥**

यदि " विधवोद्वाहस्य " वेदशास्त्रसम्मतत्वं तर्हि " मृते म्रियेतेति " कथं संघटेतेति विप्रतिपत्तेरेवोच्यताम् । नेदानीं विस्मृतिं वव्राज कथानिखिलसतीसीमन्तसीमासिन्दूरबिन्दोः श्रीमत्याः सावित्रीदेव्याः । या हि यमानियन्त्रणायन्त्रितमपि स्वपतिं स्तुत्यैर्न्याय्यैश्च वचोभिर्यमं सान्त्वयित्वा मोचयामास । स्मर्यतां सचेतोभिस्तत्रभवद्भिः श्रीजनकनन्दिनीचरितम् । या हि श्रीमतीम्माधवीम्प्रति .... .... .... .... .... .... ....

**वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे ।**
**तथा मे माधवीदेवी विवरं दातुमर्हति ॥ इत्याह ।**

यदि च विधवोद्वाहचिकीर्षवो विधवोद्वाहं सबहुमानं शास्त्रीयङ्कथयन्ति तर्हि सावित्र्यादिव्रतानां विषये यथा

---

१ निषादस्थपतिं याजयेदित्यधिकरणार्थसंसिद्ध इति भावः ।

अवैधव्याय कुर्वन्ति सावित्रीव्रतमुत्तमम् ॥

किमुत्तरयन्ति । साध्वीलक्षणं च यथा ।

पतिं या नाभिचरति मनोवाग्देहसंयता ।
सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥ म. अ. ५

अत एव कविभिरुच्यते ।

जीवति जीवति नाथे मृते मृता या मुदा युता मुदिते ।
सहजस्नेहरसाला कुलवनिता केन तुल्या स्यात् ॥
पदन्यासो गेहाद्बहिरहिफणारोपणसमो
निजावासादन्यद्भवनमपरद्वीपतुलितम् ।
वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः
पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥ इति ।

तथाह मनुः

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ इति ॥

तथा तत्रैव सत्यामपि धनधान्यसमृद्धौ विधवा

कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामाऽपि गृह्णीयात्पत्यौ प्रेते परस्य तु । अ. ५ व. १५७

इत्यनेन द्वितीयस्य नामापि निषेधन्तं कथयन्तं च साध्वीविषये " विधवोद्वाह " निषेधं प्रतिषेधन्तं च तस्य शास्त्रीयत्वं भगवन्तं मनुमपि निन्दितुं न बिभ्यतीति प्रशस्योऽमीषां वैदुष्यप्रकारः । तथा तत्रैव मनु. अ.५ वचनं १५८

आसीता मरणात्क्षान्ता नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥

इत्युपदिशन्नपुत्रापि पुत्रार्थमपरं पुरुषं न सेवेतेत्यनुशास्ति यथा अ. ५ वचनं. १५८

अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥ इति॥

तस्मादपुत्राऽपि स्वर्गं लभते तथाह तत्रैव मनुः अ. ५ वचनं १६०

मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ इति ॥

तथैवाऽथर्वश्रुतिः ।

इयं नारी पतिलोकं वृणाना धर्मं पुराणमनुपालयन्तीति ॥

एवं नियोगमपि दूषयन्नाह मनुः अ. ८ व. ६४–६९

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः ॥ इति

तत्र कारणमाह ।

अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ इति ॥

तत्र प्रमाणमाह ।

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ॥ इति ॥

विधवोद्वाहनिषेधमाह ।

न विवाहविधावुक्तं विधवावेदनम्पुनः ॥ इति ॥

अन्यत्रापि च

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाऽकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः ॥ इति ॥

एवं विधवोद्वाहस्य अनौचित्यमेव प्रतिपादयन् क्रतुरपि

ऊढायाः पुनरुद्वाहं दत्ता कन्या न दीयते ।
विधवायां प्रजोत्पत्तिर्देवरस्य नियोजनम् ॥
बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः ॥

इति कलिधर्मेष्वाह

ननु निराकृतेऽपि नष्टे मृते या पत्या वा परित्यक्तेत्यादिविप्रतिपन्ने विषये उपन्यस्ते च प्रमाणनिवहे

**स तु यद्यन्यजातीयः पतितः क्लीब एव च ।**
**विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा ॥**
**ऊढापि देया साऽन्यस्मै सप्रावरणभूषणा ।**

इति कात्यायनवचनाद्विधवोद्वाहसिद्धिरिति चेन्न । नेदं वचो विधवोद्वाह समादिशति किन्त्वज्ञानाद्विवाहे कृते यदि सोऽपरजातीयः पतितः क्लीबो दुष्टकर्मा सगोत्रो दासो दीर्घामयो[1] वा ज्ञातस्तर्हि सा कन्या सप्रावरणभूषणा ऊढाऽप्यन्यस्मै देयेति। नात्र विधवोद्वाहशङ्कालेशोऽपि । न चास्तु नाम विधवोद्वाहस्यात्राऽनुल्लेखः किन्तूढाऽपि देयेति पुनर्विवाहविधिरस्त्विति शङ्क्यम् । सगोत्रो वेति स्वारस्याद्वाग्दत्तापरमेवैतदिति विद्वन्मनोहरायां स्पष्टम् । अपि च । ऊढापि देयेति वचनेन पाणिग्रहणे जाते विधिरयम् । न च सप्तपदीतः[2] पश्चात् । अपिपदस्वरसात् । मनु. अ. ९ वचनम् ७८

**अतिक्रामेत्प्रमत्तं या मत्तं रोगार्तमेव वा ।**
**सा त्रीन्मासान्परित्याज्या विभूषणपरिच्छदा ॥**

अत्र कुल्लूकः । अतीति । या स्त्री द्यूतादिप्रमादवन्तं मदजनकपानादिना मत्तं व्याधितं वा शुश्रूषाद्यकरणेनाऽवजानाति सा विगताऽलङ्कारशय्यादिपरिच्छदा त्रीन्मासान्नोपगन्तव्येति ।

व्याधितादिदोषभाजः पत्युरवमानेऽपि दण्डविधानात् स तु यद्यन्यजातीय इति कात्यायनवचने न पुनर्विवाहोऽभ्याशमितः । तथा च तेनैव कात्यायनेन मुनिना

**क्लीबं विहाय पतितं या पुनर्लभते पतिम् ।**
**तस्याम्पौनर्भवो जातोऽव्यक्तमुत्पादकस्य सः ॥**

इति निन्दया पुनर्भूत्वमुच्यते । न चैतेनैव पुनर्विवाहसिद्धिः शङ्क्या । पुनर्भ्वा अन्नादिग्रहणेऽपि अङ्गिरसा निषेधोक्तेः ।

---

१ दीर्घरोगीत्यर्थः २ विवाहस्तु पञ्चावयवः । वरणं १ वाग्दानं २ पाणिग्रहणं ३ विवाहहोमः ४ सप्तपदी चेति ५ ।

अन्यदत्ता तु या कन्या पुनरन्यस्य दीयते ।
तस्या अन्नं न भोक्तव्यं पुनर्भूः सा प्रगीयते ॥ इति

स एव श्रीकात्यायनमुनिः

पतिमुल्लङ्घ्य मोहात्स्त्री किं किं न नरकं व्रजेत् ।
कृच्छ्रान्मनुष्यतां प्राप्य किं किं दुःखं न विन्दति ॥

इति वचनेन स तु यद्यन्यजातीय इत्यस्य वाग्दत्तापरत्वमेव द्योतयति । किं च

कृते सप्तपदे भर्तुर्वियोगो यदि जायते ।
न देया पुनरन्यस्मै कलौ कन्या मनीषिभिः ॥

इति बहुनिबन्धधृतबाभ्रव्यवचनैकवाक्यतया तस्य सप्तपदीतः पूर्वविषयकत्वमेवाऽवबोद्धव्यम् । एतेन "नष्टे मृते प्रव्रजिते" इति पराशरवचनमपि स्वरसतः संगच्छते ।

अयि वेदशास्त्रमर्मज्ञाः प्राज्ञाः ! अन्योऽपि लोचनपथातिथिः क्रियतामेषां प्रबलपाण्डित्यप्रभावः । अमी हि दोषान्वेषणाधिया प्रवर्तन्ते शास्त्रेषु न तु गुणानवलोकितुम् । यान्युपन्यस्यन्ते प्रमाणान्येभिस्तान्येवाऽसाध्वीविषये कुण्डगोलकसंकरजातिविषये च शास्त्रे दृश्यन्ते । प्रत्यक्षीकृतं श्रीमद्भिरेषान्तत्रत्यं वैलक्षण्यम् । हा ! कष्टम् ! सुधियः !

वादोऽपि मार्मिकजनैः सह पुण्यलभ्यः ।

किन्तु नैतादृशमस्मद्भाग्यम् । किं कुर्मः । सम्यगुक्तमेतादृशानां विलक्षणलक्षणलक्षितानां वर्णसाङ्कर्यविचक्षणानां विचक्षणतामुपवर्णयता महाकविना श्रीभारविणा ।

शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥

तथैव कविप्रवरेण श्रीकृष्णपिल्लैन

काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने चिरं
दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः ।
कासारेऽपि विकासिपङ्कजचये खेलन्मराले पुनः
क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्वेषते ।

अत एव सुधियः ! यद्यपि 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर' मिति स्पृहयामस्तथापि यदि तस्मिन्स्वयमागत्य संलग्नेऽवश्यं प्रतीकारो विधेय इति समापतितं खल्वेतत् ।

न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ।

इति च जानन्तः पौनःपुन्येन सनातनधर्मरक्षितये यतामहे । एते हि धीवरा मुग्धान्मत्स्यानिव जनान्पाशयन्तः सुधीवेरा भवितुमिच्छन्तः शैलविवरेभ्यश्चटकानिवह इव वदनविवरादनर्गलवचसायुक्तीः प्रकाशयन्ति । तासु प्रथमेयमवलोक्यतान्तावत् । वशिष्ठः ।

पाणिग्राहमृते बाला केवलम्मन्त्रसंस्कृता ।
सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति ॥

अमी हि 'पाणिग्राहमृते' इत्यत्र सप्तमीतत्पुरुषसमासेन विधवोद्वाहं साधयन्ति तन्न 'फलति पुरुषाराधनमृते' इतिवदत्रापि ऋतयोगे द्वितीयाविधानात् । न च अन्यारादिति पञ्चमी शङ्क्या । 'ततोऽन्यत्रापि दृश्यते' इति द्वितीयाविधानात् । 'ऋते द्वितीया च' इति चान्द्रसूत्रेण च तत्सिद्धेः । अथवा । यथाकथञ्चित्साधितेऽपि सप्तमीसमासे केवलं मन्त्रसंस्कृतेतिपदान्मन्त्रसंस्कृतैव बाला न तु दत्ता सा पाणिग्राहे मृते सति पुनः संस्कारमर्हति । द्वितीयमेति शेषः । सा चेदक्षतयोनिरिति पदेन पुनर्भूविषयकमेतदिति च स्पष्टम् । अथवा । केवलम्मन्त्रसंस्कृतेति पदस्वारस्याद् "अद्भिरेव द्विजातीनां कन्यादानं विशिष्यत" इति शास्त्रानुशासनात्कन्यादानप्राक्कालीना एव मन्त्रा गृह्यन्ते । तस्मान्नष्टे मृते, स तु यद्यन्यजातीय इतिवत्सप्तपदीतः पूर्वमेवैतद्विधानम् । अन्यथा "मन्त्रार्थविपरीता तु सा स्मृतिर्न प्रशस्यते" इत्यनुशासनादेतद्वैयर्थ्यापत्तेः । तथा

१ बुद्धिमतां वरिष्ठाः पक्षे धीवरेषु वरिष्ठाः । २ अन्या द्वितीयोच्छ्वासे वक्ष्यन्ते ३ पत्यौ.

**सकृदंशो निपतति सकृत्कन्या प्रदीयते।**
**सकृदाह ददानीति त्रीण्येतानि सकृत्सकृदिति**

मनुवचनबाधापत्तेश्च।

न च "पाणिग्राहे" मृते इति सप्तम्यन्तपाठे विधवोद्वाहसिद्धिः शङ्क्या। तथाप्युक्तशास्त्रैकवाक्यतयाऽमृत इति च्छेदेन न दोषः। अत एव महाभारते आदिपर्वणि अ. १९८।

**न चाप्यधर्मः कल्याणं बहुपत्नीकता नृणाम्।**
**स्त्रीणामधर्मः सुमहान्भर्तुः पूर्वस्य लङ्घनम्॥ इति॥**

तथैव याज्ञवल्क्यस्मृतौ

**मृते जीवति वा पत्यौ या नान्यमुपगच्छति।**
**सेह कीर्तिमवाप्नोति मोदते चोमया सह॥ इति॥**

"पाणिग्राहे" इति मिलत्येव वचने तेन च विधवोद्वाहविधानमेभिरनुमीयते। किन्तु तद्बाधकवचनानि पूर्वापरप्रसङ्गः अपराभिः स्मृतिभिश्चैकवाक्यतेति कः पश्यति सम्प्रदायम्। कपोलकल्पितार्थसंवलितान्येवैतानि धर्मशास्त्रवचनानि श्रुत्वा भारतवर्षस्य पतिशोकदहनपतङ्गायिताः साध्व्यः कुलवध्वः परमात्मानं प्रति प्रार्थयन्ते। यथा—

हे स्वामिन्! हे पुरुषोत्तम! एकदा वयं पितृसदनाङ्गणरिङ्गणैः स्खलितैर्हसितैः कुत्रायं वाद्यरावः क्वास्ति दुन्दुभिघोषः पितः! दर्शय २। मातः! त्वमेव दर्शय। भ्रातः! अविलम्बितं चलेति प्रतिपदं स्खलन्तीभिर्वाग्भिः शैशवात्सहजमधुराभिर्व्याहरन्त्यो मात्रादीनां मुदा परिपूर्णं चेतः कुर्वन्त्यः किञ्चिदुदञ्चितवयसः सखीभिरान्दोलितचित्तप्रवृत्तयः, अद्य वाग्दानं, अद्य वरागमनं, अद्य परिणयदिनमिति सानन्दा अभूम।

हे कर्तुमकर्तुमन्यथाकर्तुं समर्थ! ततोऽद्य भृत्याः समागता, अद्य भूषणान्यायातानि इति श्वशुरसदनगमनपर्याकुलमनसामस्माकमेकदा तत्र गमनदिवसो निर्वर्तितः। तत्र चाऽद्य मङ्गलस्नानमद्य मुखदर्शनमद्याऽमुखप्रस्ताव इत्यनिर्वचनीयानि च सुखान्यन्वभवाम। तत उपस्थिताः कल्याणिपश्चिमा रात्रयः। अद्य मुहूर्तस्नानं श्वोऽग्निकार्यमद्य गीतान्यद्य शयनीयं सज्जीभवति, अद्य चित्राणि क्रियन्ते, इति सावहेलं सखीभिरुक्ताभिर्हसिताभिरस्माभिः साग्रहाऽऽश्लेषादिभिः पत्युः प्रतिक्षणमसुलभानि सुखान्यनुभूतानि।

हे दयालो ! अद्य खलु " सकेशां विधवान्दृष्ट्वा सचैलं स्नानमाचरेदिति " स्थितिम्प्रापिताः स्मः। किन्तु विधवात्वं प्राप्ता अस्मान्पालय। अन्यथा हे करुणार्णव ! न जानीमो यत्केनाऽदृष्टेन दुरितेनाद्य संवृत्ताऽस्माकमियन्दशा । साम्प्रत विधवोद्वाहविषयप्रतिपादकैर्मिथ्यावादिभिः पराशरादिधर्मशास्त्रप्रमाणान्यन्यथयाद्विविधवोद्वाहः सनातनधर्म इतिप्रभृतिभिररुन्तुदैर्वचनैर्व्याकुलीक्रियन्ते नश्चेतांसि ।

हे गोविन्द ! पुरा हि त्वया वराकीणामस्माकन्नाम पुत्रिकेति ततो वधूरद्य विधवेति च कारितमस्ति । इतः परमन्यदपि नामान्वेषितमस्ति किम् ? यच्छूद्रजातिस्त्रीणामिवैतन्नवीनपापजननद्वारा " पुनर्विवाहं " " विधवोद्वाहं " वा मन्दभाग्यानां नः कारयितुमिच्छसि । हे मर्यादापरिपालक ! त्रायस्व २ पालय २ मुधाकुतस्तापयस्यस्मान् । हे लोकरक्षक ! त्वयैव " तस्माच्छास्त्रं प्रमाणते कार्याऽकार्यव्यवस्थिता " वित्युक्तमस्ति । साम्प्रतं त्वमेवैभिर्दुष्टजनैः स्वां मर्यादां भेत्तुमिच्छसि । हे शरण्य ! त्वयैव श्रीमद्व्यासरूपेण ।

**मृतं भर्तारमादाय ब्राह्मणी वह्निमाविशेत् ।**
**न विशेच्चेद्यस्तकेशा तपसा शोषयेद्वपुः ॥ इति॥**

कथितमस्ति । तथैव विष्णुस्मृतावपि मृते भर्तरि ब्रह्मचर्यन्तदन्वारोहणं वा । इति । तथैव तत्रैव

**मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।**
**स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ इति ॥**

तथैव भारतेऽनुशासनपर्वणि । अ० १४६

**न चन्द्रसूर्यौ न तरुं पुन्नाम्ना या निरीक्षते ।**
**भर्तुर्वर्गं वरारोहा सा भवेद्धर्मचारिणी ॥**

तथैव भारते आदिपर्वणि अ० १०४

**मृते जीवति वा तस्मिन्नापरं प्राप्नुयादिति ॥**

तथैव मध्यपाराशरीये ।

**सहानुगमनं कुर्यात्कुर्याद्वा नैष्ठिकं व्रतम् ।**
**अयं धर्मः स्त्रियाः प्रोक्तः कलौ काले विशेषतः ॥**

तस्मात् हे शरणार्तिनाशन ! एभ्यः कामिभ्यो दुष्टेभ्यः सुकृतनष्टेभ्यो व्यालेभ्यः

संत्रस्तान्तःकरणास्त्वदवलम्बनमात्रशरणाः स्मः । अस्मान्पालय तारयेति क्रोशन्ति भारतललनाः ।

प्रियपाठकमहोदयाः! सनातनधर्मसुहृदः! एवं विधवोद्वाहस्य अशास्त्रीयत्वेऽनौचित्ये निन्द्यत्वे च नास्ति स्तोकोऽपि संदेहः। इति समुपहृतस्तत्रभवद्भ्यः सनातनधर्मप्रणयिभ्यः प्रबन्धोऽयम्। अयं हि 'विधवोद्वाहखण्डनस्य' शास्त्रसाराऽनुप्राणितः प्रथमोच्छ्वासः। सोऽयं विपक्षपक्षक्षपणायाचिराय बोभूयात्। अस्य हि 'गुणान्गृह्णीत मा दोषान्नीरक्षीरविवेकिन' इति समभ्यर्थयमानो विरमति प्रथमोच्छ्वासलेखादिति शम्। ॐ शान्तिः ३

**गुरुश्रीवामनाचार्यचरणाम्भोजसेवया।**
**भट्टः श्रीबलभद्राख्यो ग्रन्थमेनं व्यरीरचत् ॥ १ ॥**

श्रीयुतगोकुलस्थभट्टोपाव्हश्रीदेवकीनन्दनतनुजनुषा भट्टबलभद्रशर्मणा विरचितो विधवोद्वाहखण्डनस्य प्रथमोच्छ्वासः।

॥ श्रीनन्दनन्दनार्पणमस्तु ॥

---

श्रीः कैरविणीतः।

# विश्वकर्मब्राह्मण्यविचारः।

**अकाण्डसमरत्वरोच्चलितदानवाडम्बरं समापयति यस्स्फुटच्चटुलदिक्कटाहान्तरैः। रवैरधिकभैरवैर्विकटपाञ्चजन्योद्भवैस्तभीशमजमाश्रये भरितभक्ति नारायणम् ॥ १ ॥ मुखबाहूरुपज्जानां वृत्तिभेदान्प्रकल्पयन्। संहरत्यन्तकाले यस्स हरिर्मानसेऽस्तु नः ॥२॥ कालेयकालसंभवसुदृढावष्टम्भनिर्भरोत्सेकम्। कश्चन दूराद्धर्वति दुर्वादिनमद्य मामिका रचना ॥ ३ ॥**

अयि चिरत्वेलपार्थसारथ्याचार्य! भवत्प्रहितां पत्रिकामध्यगमाम वयम्। अदर्शाम चामूलचूडमिमाम्। तथापि यत्सत्यं नासादयामो भवता जिज्ञासितमंशम्। वाक्यावली तु भावता न प्रगल्भते पण्डितपुण्डरीकाणां सदसि धीरमवगाढुमिति किमिति वृथैवास्मानात्मानञ्च कदर्थयितुमुपक्रान्तं भवतेति अत्र तु न किमपि कारणमुपलभामहे, असाम्प्रततममिदं अकाण्डे सनिर्बन्धं पत्रिकाप्रदानपूर्वकं गिरिगुहास्विव निजनिजभवनाङ्गणेषु स्वैरं विजित्य विश्रान्तानां विदुषां हरिणामिव हरिणेन

भवतोपक्रान्तं प्रबोधनमिति । किमेवं पत्रिकां प्रहिण्वतश्चिकीर्षितमीप्सितं वा भवतः ? किं मन्ये संपिपादयिषस्यभिनवं ब्राह्मण्यम् । आहो स्थितमेव प्रचिकटयिषसि ? । अफलमिदमुभयमपि, जागर्ति तत्रभवाति दुर्विदग्धमुग्धजनकाङ्क्षितकल्पतरूयमाणे, धर्मद्रुमदावपावके, सदाचारपरायणजीवजातकाकोले, निरवधिकमहिम्नि, जनितजगज्जडिम्नि, कलिहतके किंवा कुतो या नवीनमथ प्राचीनमेव किमपि प्रकाश्यं प्रच्छाद्यं वेति कोऽयमद्य भवतो निर्बन्धः ? किञ्च प्राचीनस्य सिद्धिरेव साधनविरोधिनी असिद्धस्य तु सिद्धिर्न जात्वपीति तत्साधनदुराशावेशः क्लेशाय केवलमिति विमृशतु भवान् , अत इयमुभयतस्पाशा रज्जुः । अथ अस्तु नाम भवतोऽपि ब्राह्मण्यमुत मास्तु । उभयथापि न किमपि नश्छिन्नम् । अथापि विद्वायमानमनसा प्रतायमानमभिहितमित्यादौ तत्रैव चक्षुर्निक्षिपामः वयन्तु प्रागेव जिह्णीम उदास्महे च भवति किञ्चनोदश्चयितुमञ्चितां वचनावलीम् । तथापि प्रयतमानो भवान्मा विमनीभून्मा च मतोर्वीतलस्यैव निर्वीरतामिति इयदुपविक्रंसामहे । कुलं ब्राह्मणेतरजातिष्वन्तर्भावमिति लेखकस्य को वा भावो भवत इति तपस्वी भवानपि पृष्टः किमाचष्टाम् ? अतोऽस्माभिरधुना ब्राह्मण्यं वेदप्रमाणैरेव स्थापनीयमिति मदीयप्रार्थना इति वक्तुः किं विवक्षितमायुष्मतः ? किंनिष्ठं ब्राह्मण्यं स्थापनीयपदे पदमाधत्ते ? अत्र हि वाक्येऽस्माभिरिति बहुवचनं मदीयेत्येकवचननियतो मादेशश्च स्थापयितृप्रार्थयित्रोरैक्यं विरुन्धः । भेदे चास्माभिरिति कुत्रान्वेति किञ्चान्यदीयस्य ब्राह्मण्यस्य वैदिकत्वं सिद्धमेवेति नेदमायुष्मतः प्रार्थनाप्रयासमपेक्षते । स्वकीयस्य तस्य साधने लालसा च दत्तोत्तरा । किन्त्विल्यादिवाक्यसन्दर्भोऽपि जरद्गवादिवाक्येन साकमजर्यं सङ्गतमवार्यमातिष्ठते ' ब्राह्मण्यं ' च बेदादिसकलग्रन्थोक्तवचनेनायास्यतीत्यत्रास्तान्नाम वचनैकवचनासाधुत्वाचिन्ता, परन्त्विदमेव विख्यापयत्यस्मान् वचनानां ब्राह्मण्योत्पादकत्वनिश्चयो भवतो दुर्निवार इति । कथमथवा जानातु भवान् कारकज्ञापकयोर्हेत्वोर्विशेषम् ? तत्रत्यदेशीयाः किल विश्वकर्मवंशजानां ब्राह्मणानां ब्राह्मण्यं विश्वकर्मवंशजत्वं ब्राह्मण्यं च नास्तीति वदन्ति इति सत्यं यदि भवद्वचनं सत्यं व्याहतभाषिण एव ते ये स्वयमेव कांश्चिद्विश्वकर्मवंशजत्वब्राह्मण्ययोराश्रयतयोद्दिश्य तेष्वेव तदद्वयमपलपन्ति । अतो न शोभां बिभर्तीत्यादरणीयमेवायुष्मतो भाषितम् । भवदाश्रयेण प्रकृतिं तृतीयामाश्रितः ' सिद्धा-

न्तोऽपि सिद्धान्तं तावदवश्यं प्रेषणीयामिति प्रार्थयामः । ' इति वाक्ये इति प्रशस्यमेव भवतः पाण्डित्यम् । न च प्रार्थयितुरीप्सिततमस्य तथात्वमेव युक्तमिति युक्तं इतिना तस्याभिधानात् । तिङ्कृदादिपरिगणनस्य प्रायिकतया निपातस्याप्यभिधायकत्वाङ्गीकारात् । अत एव हि ' विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ' इति संगच्छते । विश्वकर्मकुलसिद्धान्तं कर्तुं पण्डिताः नैव सन्तीति प्रकटीकुर्मः, इति बिभीषिकया किं भवता साध्यते ? किन्नाम विश्वकर्मकुलस्यैव कश्चनान्यादृशस्सिद्धान्तोऽस्ति ? उत विश्वकर्मकुले सिद्धो योऽयमन्तस्तं कर्तुं पण्डिताः न सन्तीति प्रकाश्यते ? आद्ये एकदेशनियतस्य नियतजातिसिद्धस्य तस्य प्रकाशने पण्डिताभावप्रसाधनं तादृशजातेरेवात्यन्ताभावमवगमयतीति न कस्यचिदितरस्य हानिः प्रत्युत भवत एवेदमनर्थाय । द्वितीयस्मिन्नपि कल्पे सङ्कल्पसाचिवस्य भगवतश्चराचरगुरोरेव तत्राधिकारात्तदभावप्रकाशनान्नास्तिक्यमेवोद्घोषितमिति भवत एव हानिः । विजयनगरं इत्यारभ्य कृष्णेत्यादीत्यन्तेन प्रतिपादितानां भूयसीनामपि राजधानीनां कथमेकत्वमिति चिन्तयामहे । अथवा किमिह चित्रं विचित्रनिर्माणमयमायाऽऽजीवस्य मयस्य कुलकूटस्थतामुत्प्रेक्षमाणे भवति । यदि वैदिकानां वचसामस्ति ब्राह्मण्यनिर्माणे नैपुणी तर्हि विजयनगरादिसंसदामपि संभाव्यत एव सेति किमत्राभिनवं नाम ? यदि तत्र सङ्गतैः पण्डाशालिभिः प्रतिष्ठापितमिदमिति विवक्षा तर्हि किं मुधोद्घुष्टैः पण्डितै राजधानीभिर्वा वारंवारं गुणिताभिः ? ननु नाद्याप्युपरतानि तानि प्रमाणानि यदधीनो विदुषामर्थनिर्णयः अतस्तान्येव परामृशामः इत्यलमविदग्धमुग्धवचनरचनाप्रकारैः प्रशमितैः । प्राथमिकमिह, ब्राह्मणोऽस्य मुखमासीत् इत्यादिकम् । विराजो मुखादिदञ्च ब्राह्मणस्योद्भवमभिधत्ते । किमेतन्निर्देशेनास्वादितं भवतेति तु नावगम्यते । न हि भवतो विराजो मुखादुत्पत्तिः प्रात्यक्षिकी येन तल्लिङ्गेन भवांस्तथा गृह्येत योऽजायत स ब्राह्मण इति तु विमतैरप्यङ्गीकृतमेवेति सिद्धसाधनमिदम् । तादृशोऽस्मत्कूटस्थ एवेति तु श्रद्दधानेषु देवेषु वा परं शोभते । सिद्धावपीदं न भवतो ब्राह्मण्यसाधकम् । यस्यकस्यचित्कूटस्थभूतस्य ब्राह्मण्येऽपि तस्मात्पराशरादिभिः पश्वादिजनिरप्युक्तेति न प्रथमप्रमाणेन भवतो ब्राह्मण्यं मात्रयापि साध्यम् । किं विशिष्य, द्वितीयतृतीयतुर्यादयोऽपि न भवन्तं चेतसापि स्पृशन्तीति स्थिते मुधैव तेषु पक्षपातो भवतः परिहास्यतामेव समर्थयते, यच्च विश्वकर्मणो

देवजात्यन्तर्भावः पुष्करद्वीपनिर्माणं बृहस्पातिसंबन्ध इत्यादिकमुपन्यस्तं न तेनापि भवदिष्टसिद्धिः, एकस्मादेव कश्यपात्सुराणामसुराणां तिरश्चामपि प्रभवो वर्णित इति किं तेष्वैकजात्यमस्ति ? न च तत्र प्रत्यक्षादिप्रमाणान्तरैर्विशेषव्यक्त्या व्यवस्थितिरत्र तु न तथेति सन्तोष्टव्यमायुष्मता । अतीन्द्रियेष्वेवंविधेषु विषयेषु श्रुतिस्मृतिप्रभृतेरेव प्रामाण्यात्तस्य च भवद्भिरुद्धृत्वात् तथा हि हेमाद्रिधृते गारुडे ' रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च स्वर्णकारश्च सौचिकः ॥ कारुको लोहकारश्च शिलाभेदी तु नापितः । तक्षकस्तिलयन्त्री च सूनुश्चक्री तथा ध्वजी ॥ एते षोडशधा प्रोक्ताश्चण्डाला ग्रामवासिनः । एतेषां दर्शनं स्पर्शं संभाषणमतः परम् । स्नानभोजनवेलायां जपहोमार्चने तथा ॥ स्वाध्यायसमये चैव ध्याने नेच्छन्ति सूरयः । दर्शने सूर्यमालोकेद्भोजने भोजनं त्यजेत् ॥ संभाषणे च पाणिभ्यां श्रोत्रे सम्यगुपस्पृशेत् । उत ब्राह्मणसंभाषां कृत्वा दोषात्प्रमुच्यते ॥ ' इति रजकचण्डालादिभिः प्रतिपन्ननिकर्षैस्सह पाठेन साक्षादेव ग्रामचण्डालान्तःपातोपदेशेन दर्शनस्पर्शनादिष्वपि प्रत्यवायकथनेन च भवतो ब्राह्मण्यं नास्तीति स्फुटं किन्नूचाऽत्रैव ' उत ब्राह्मणसंभाषां कृत्वा दोषात्प्रमुच्यते ' इति वचनेन न जात्वपि भवतो ब्राह्मण्यमस्तीत्युन्मील्यते अन्यथा हि न भवदलोकनादेः प्रत्यवायावहत्वम् ब्राह्मण्यसद्भावेऽर्पादमस्तीति अभ्युपगमश्च प्रायश्चित्ततया ब्राह्मणसंभाषणविधानेन विरुध्यते भवतोऽपि ब्राह्मण्ये तस्य भवतश्चाभेदेन ब्राह्मणस्य भवतो दर्शनेन योऽयं प्रत्यवायस्स तदापि तदवस्थ एवेति न तेन निस्तारः । न हि सकृत्कृतस्य प्रत्यवायहेतोः पुनः करणं प्रायश्चित्तमाम्नातमस्ति अतः ' शिल्पिनां कर्म यजनं याजनाध्यापने तथा ' इत्यादिकं प्रक्षिप्तमप्रामाणिकं चेति संभाव्यते यद्दर्शनमहिम्ना सांसिद्धिं च विप्राणामध्ययनयोग्यता कुण्ठीभवति त एवाधिकृता अध्ययने अध्यापनादिष्वपीति रमणीयोऽयं शास्त्रार्थः । न च विमतवचने वा कुतो नेयं शङ्केति वाच्यम् । अमीषां भवन्निकर्षनिष्कर्षकाणां वचनानां हेमाद्रिप्रभृतिवैदिकपरिग्रहस्य सति भौमत्वात ! अथाप्यस्मदपरिग्रहादेवाप्रामाण्यमिति चेद्भूथ दौर्ललित्यमिदं विधिहतकस्य ।

क्रमशः

# संवादसंग्रहः।

## संपादकीयाभिप्रायाश्च।

( News and Notes ).

### भारतवर्षे युवराजः।

साम्प्रतिकभारतचक्रवर्तिनः कुमारः सहात्मनः सहधर्मिण्या भारतवर्षमवलोकितुकामो मासेऽस्मिन्नत्रोपस्थितः। मोहमय्यामुपस्थितश्चायं सभाजितस्तत्रत्यैर्नागरिकैश्चान्यैश्च मोहमयीविभागादिनिवासिभिर्भूपतिभिः। सुखयतु युवराजमियं भारतयात्रा।

---

वङ्गेषु स्वदेशीयान्दोलनं सविशेषमेव समेधते। प्रकुपिताश्चानेन राजपुरुषाः प्रक्षुब्धा इव कपयो नानाविधाश्चेष्टा वितन्वन्तो विस्मापयन्ति सरलमतीन्पुरुषान्। नव्यवङ्गविभागाधिपतिः फुल्लरमहोदयो राजविद्रोहमेवात्राभिवीक्षमाणो यथेच्छं प्रयतते श्लाघनीयमेनं स्वदेशीयवस्तुस्वीकारं वङ्गीयानां प्रतिरोद्धुम्। किंचायं विषयेत्र प्रख्यापितं कैश्चिद्वङ्गीयैः प्रधानपुरुषैर्घोषणापत्रं प्रतिरोधयामासेति श्रूयतेऽस्माभिः। केचित्पुनराधिकारिणः परां काष्ठामारूढाः कोपस्य किं कर्तव्यं किं चाकर्तव्यमिति किञ्चिदप्यनवबुध्यमाना वन्दे मातरम् इति गीतमपि राजविद्रोहबीजतया पश्यन्तः कोशाकभटनिर्विशेषैर्गुरखेसैनिकैर्विभीषयन्ति पौरजानपदान् अविगणिताधिकारं च महामहोपाध्यायादीनपि रक्षापुरुषपदे कुर्वन्ति। न जानीमः कथं नामैतन्नीतिप्रियतयाऽऽत्मानं प्रख्यापयतामिंग्रेजमहोदयानां युक्तरूपमिति। यदि च न्याय्यमेवैतदपि तदा किमपरं तत्कर्म यन्नामान्याय्यताकोटिमवगाहेतेति चिरायापि विचारयन्तो वयं न जानीमः। स्वजनविद्वेषिणः पुनः केऽपि दुर्मतयो वन्दे मातरम् इति पदद्वितयस्य ( बांधो और मारो ) बध्यतां मार्यतां चेत्यर्थ इति बोधयन्ति संस्कृतानभिज्ञान्वैदेशिकानधिकारिण इति शृण्वतां विस्मयते च विषीदति च नो हृदयम्।

---

अस्तमितोऽत्र मासे तैस्तैः कर्मकिरणैः प्लोषितभारतवर्षः करधनप्रलयार्कः समुदितश्च लार्डमिंटोमहाभागः। मोहमय्यामेव च लार्डकरधनमहोदयात्स्वीचकारायं भारताधिकृताधिकारान् आरूढश्चायं कलिकातामुपगतो भारताधिकृतपदमिति श्रूयते।

---

